


॥ श्रीः ॥

# सवलयं शतरुद्रीयम्

पदवाक्यप्रमाणावारपारज्ञ योगिवर्य
श्रीनिभराजेन्द्र विरचितेन रौद्र-
कल्पनामकेन तिलकेन
संवलितम् ।

तच्च

काशीस्थ लालघट्टे निषेदुषा
भृगुनाथ ब्रह्मचारिणा
काश्यां विद्वद्वरैः संशोध्य परोप-
काराय प्रकाशितम् ।

संवत १९७१

काश्यां रामघट्टे हितचिन्तकनाम्नि यन्त्रालये
बी. एल्. पावगी द्वारा मुद्रितम् ।
प्रथमावृत्तिः ) १९१४ ( मूल्यं ३ आणकाः




# विज्ञप्तिः

शतरुद्रीयमिदं ब्रह्ममुखान्निस्सृतम् । अस्य भाष्यकर्ता श्रीमद्योगिवर्य विप्रराजेन्द्र स्वामी । न खलु विप्रराजेन्द्रस्वामिनो जगति किमप्यविदितमासीत् किन्तु परमकारुणिकः स ब्रह्मर्षिः लोकानुजिघृक्षयैव बहुतरग्रन्थान् सम्विरच्य स्वबहुद्रव्यव्ययेन मुद्रापयित्वा प्रकाशयामास तान् यथाहः—

पाणिन्यादिमहर्षिसूक्तसुमनाश्शब्देतुशब्दामृतम् ।
व्याचष्टे स्मरसेषुसारविभवैश्शास्त्रेषु षड्दर्शनम् ॥
सिद्धान्तं निगमागमादिविहितं काण्डत्रयाविष्कृतं ।
साराढ्यं खलु सर्वपूर्वकमहो शास्त्रार्थसन्दर्शनम् ॥ १ ॥

संक्षिप्तं त्वथ ज्योतिषेपि विमलं वेदाङ्ग चक्षूःपरम् ।
चायुर्वेदविनिश्चितोर्थविषये त्वष्टाङ्ग शुद्ध्याह्वयम् ॥
प्रश्नादीन्बुधसम्मतान्बहुविधान्ग्रन्थान् सटीकोज्वलान् ।
सिद्धान्तानथ यश्चकार सुलभान् श्रीविप्रराजाह्वयः॥२॥

अथास्मिन् प्रकृते शतरुद्रीयरौद्रकल्पे भाष्ये तु श्रुत्यर्थः श्रुति, स्मृति, पुराणेतिहासतस्सुस्पष्टतया प्रकटीकृतः इत्यतश्चै-तत्पाठकानां श्रुतिसिद्धान्तार्थलाभाकांक्षिणां परानन्दः परमकल्याणञ्चाशु भविष्यत्येवेत्यतो वाराणस्यां श्रीसनातन-धर्मप्रवर्द्धनी-पाठशालासंस्थापकेन " भृगुनाथ ब्रह्मचारिणा " स्वप्रयासेन मुद्रापयित्वा पुनः प्रचारितम् । यतश्च स्वल्पायासेन मन्त्राज्ञानवतां पूर्णमन्त्रपाठफलं भवेदित्यतो ऽवलोकयन्तु सुधिय इति मुहुः प्रार्थये इति शिवम् ।

न २

श्रीगणेशाय नमः ।

# ॥ सवलयं शतरुद्रीयम् ॥

---

ॐ गणानान्त्वा गणपति ँ हवामहे प्रिया णान्त्वा प्रियपति ँ हवामहे निधीनान्त्वा निधिपति ँ हवामहे व्वसो मम । आहमजानि-

श्रीगणेशाय नमः ॥ वेदवेद्यम्परम्ब्रह्म यद्देवैरनुगीयते । नमस्कृत्य तमीशानं रौद्रकल्पादुभुतम्ब्रुवे ॥ १ ॥ अथ ग्रन्थादौ सर्वत्र मङ्गलस्यावश्यकत्वे स्थिते तदपि गणपतेरेवेत्याह । श्रीति । तत्रैवं सति "पुष्पम्फलंच वस्त्रंच धान्यन्ताम्रं सधातुभिः । रत्नं रौप्यं मणिर्व्विद्या नवधेत्थं निधिर्म्मत" इति स्मृत्या नवत्वा-वच्छिन्ननिधिरूपया श्रिया सहितो गणेशः श्रीगणेशस्तस्मै श्रीगणेशाय नम इत्यादिरर्थः । अथ ब्राह्मणेन षडङ्गो वेदो ऽध्येयो ज्ञेयश्चेत्यादिश्रुत्या शिक्षा कल्पो व्याकरण निरुक्तं छन्दो ज्योतिषमिति षडङ्गज्ञानपूर्व्वकवेदार्थज्ञानस्यावश्यकत्वा त्तदर्थन्तावदाह । गणानान्त्वेति । एतेनादौ देवेषु कः पूज्यश्शिव-योर्वादतो भृशम् । स्ववाहनैर्न्निधिं जग्मुश्शिवं ढुण्ढिस्ससभ्रम-दित्यादिस्मृत्या गणपतेरेव सकलदेवेष्वादौ पूज्यत्वं स्फुटीकृ-तम् । एवं सति निधीनां नवत्वावच्छिन्नयथोक्तनिधियुक्तानां

गर्भधमात्वमजासि गर्भधम् ॥ १ ॥ गायत्री त्रिष्टुब् जगत्यनुष्टुप् पङ्क्त्यासह। बृहत्युष्णिहा ककुप्सूचीभि इशम्यन्तुत्वा ॥ २ ॥ द्विपदायाश्च तुष्पदा स्त्रिपदायाश्च षट्पदाः। विच्छन्दायाश्च सच्छन्दास्सूचीभि इशम्यन्तुत्वा ॥३॥ सहस्तोमा स्सहच्छन्दसा आवृताः सह प्रमा ऋषय स्सप्त

मध्ये त्वा कोर्थस्त्वामेव निधिपतिं मत्वा सर्व्वत्र यज्ञादौ हवेति प्रसिद्धत्वेनावाह्य महे त्वाम्पूजयामहइत्यर्थः। एवं "न यस्य लोके स्वजनः परो वा नात्यादृतो नोत कश्चिद्विगर्ह्य" इत्यादिस्मृत्या ममाहमजानीत्यस्य ममाहमिति लौकिकभावाभावेपि केवलंभक्तिवात्सल्येन मम वशो वशीभवेत्यर्थः। यतस्त्वं सर्व्वजगतां गर्भधमाजन्मप्रदः स्वयञ्च तत्वतो गर्भधमजासीति मन्त्रार्थः॥१॥ तत्रैवं सति "असङ्कृत्य यदा मन्त्री ऋषिःछन्दश्च दैवतं। न सम्यक्फलदस्तस्य निगदोप्यर्थपूर्व्वक" इति स्मृत्यादौ छन्दसांज्ञानस्याप्यावश्यकत्वादाह। गायत्रीति। तत्र तावद्गायत्र्यादि ककुप्पर्य्यन्तै र्नवभि रिह छन्दसां सूचीभिस्त्वां तत्तद्भेदैर्देवाः शम्यन्तु सर्वान् क्लेशान् शमयन्त्वित्यर्थः॥ २ ॥ एवमिह छन्दसां सूचीमुक्त्वा मन्त्राणामप्याह। द्विपदा इति। एवं सतीह या द्विपदा ऋग् याश्चतुष्पदेत्यादिमन्त्राणामपि सूचीभिस्त्वां तत्तद्भेदैर्देवाः शम्यन्त्वित्यर्थः॥३॥ एवन्तर्हि कथमिह शतरुद्र्यां मन्त्राः प्रयोक्तव्या इत्यभिप्रेत्याह। सहस्तोमा इति। एवं सति छन्दसा

दैव्याः । पूर्व्वेषाम्पन्थामनुदृश्य धीरा अन्वालेभिरे रथ्यो नरश्मीन् ॥ ४ ॥ यज्जाग्रतो दूरमुदैति दैवन्तदु सुप्तस्य तथैवैति । दूरङ्गमञ्ज्योतिषाञ् ज्योतिरेकन् तन्मे मनश्शिवसङ्कल्पमस्तु ॥ ५ ॥ येन कर्म्माण्यपसो मनीषिणो

सहावृतास्सहस्तोमा ऋचस्सप्रमाः सप्तदैव्यास्सप्तच्छिद्रानुगता ऋषयश्च ऋतञ्चसत्यञ्चाभीद्धादिति श्रुतिन्यायेन पूर्व्वेषांपन्थाम् पूर्व्वकल्पीयपन्थान मनुदृश्य रथ्या रथेनोनरश्मीन्निस्तेजस्कानपि हयानूयथा नमयन्ति तथा धीरा ध्यानशीलास्त्वल्पतपस्का अप्येतत्पाठेन स्वाभीष्ट मन्वालेभिर इति मन्त्रार्थः ॥ ४॥ ननु कथन्तादृशा मुनयस्स्वाभीष्टं लेभिर इत्याह यज्जाग्रत इति। एवन्तर्हियज्जाग्रतो दूरमपि दैवम्प्रारब्धमुदैत्युदयम्प्राप्नोतीत्यर्थः एवं सति तदेवच प्रारब्ध मु शिवस्तस्य सुप्तस्य सुप्ते तु तथैवैति सुप्तमेवापद्यतइति भावः । अथ किं स्वरूपःस देव इत्याह । दूरङ्गमिति । हे शिव न यत्र सूर्य्यो भाति न चन्द्रतारके नेमाविद्युतो भान्ति कुतो ऽयमग्निरित्यादिश्रुतिवेद्यं यज्ज्योतिषाञ्ज्योतिस्तन्मे मनसः सङ्कल्पमस्त्वित्यर्थः ॥ ५ ॥ ननु स्थाणुरयम्भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थं योऽर्थज्ञ इत्सकलम्भद्रमश्नुतइत्यादिश्रुत्या यदर्थज्ञानपूर्व्वकन्तः देवोक्तफलदम्भवतीत्यभिप्रेत्याह। येनेति। एवन्तर्हि यज्ञे यज्ञावच्छेदेन येन कृत्वापसोऽर्थाज्ञानवतो मनीषिणः कर्म्माणि

यज्ञे कृण्वन्ति वितथेषु धीराः । यदपूर्व्वं यक्षमन्तः प्रजानान्तन् मे मनश्शिवसङ्कल्पमस्तु ॥ ६ ॥ यत् प्रज्ञान मुत चेतो धृतिश्च यज्ज्योतिरन्तरमृतम् प्रजासु । यस्मान् न ऋते किञ्चन कर्म्म क्रियते तन् मे मनश्शिवसङ्कल्पमस्तु ॥ ७ ॥ येनेदम् भूतम् भुवनम् भविष्यत् परिगृहीत-

कृण्वन्ति निष्फलयन्ति तत्र यज्ञे प्रमादालस्याभ्याञ्च नृगादिवद्वितथेषु कर्म्मस्वनर्थफलवत्वमपीति तन्न रोचयामहे किन्तु श्रद्धावन्तोऽनसूयन्त इति स्मृतिन्यायेन यत्र धीराः सावधानेन ध्यानवन्तो यदपूर्व्वं ज्योतिषाञ्ज्योतिरेकमिति तत्त्वम् यत्प्रजानामभीष्टम्फलं यक्षमन्तस्समाश्रयन्तस्तन्मे मनश्शिवसङ्कल्पमस्त्विति मन्त्रार्थः ॥ ६ ॥ अथ वेदो द्विविधो मन्त्रभागो ब्राह्मणभागश्चेति तमेव साधनासिद्धाभ्यां प्रकारद्वयं दर्शयति । यत्प्रज्ञानमिति । तत्र तावत्फलम्प्राप्त्या वाह्यवृत्तित्वेन यत्प्रज्ञानञ्चेतो धृतिश्चेत्याख्यायते । अथ मन्त्रस्थकर्म्मोपासनाभ्यां सिद्धं यच्चान्तरंवृत्तिव्याप्यत्वेन सत्यं ज्ञानमनन्तम्ब्रह्मेत्यादिश्रुतिवेद्यं प्रजास्वमृतशब्दाभिधेयं यस्माच्चैतेनैव विजानाति. शब्दान्स्पर्शांश्च मैथुनानित्यादिश्रुत्या न ऋतेकिञ्चन कर्म्म कर्त्तुं शक्यते तन्न मे मन इत्यादिरर्थः ॥ ७॥ ननु च कथम्पुनस्तव तत्वमिति यतो वा इमानि भूतानि जायन्तइत्यादि श्रुतिमूलकमप्याह । येनेदमिति । एवं सति येनामृतेन परम-

त ममृतेन सर्व्वम् । येन यज्ञस्तायते सप्तहोता तन्न् मे मनश्शिवसङ्कल्पमस्तु ॥ ८ ॥ यस्मिन् नृचस्सामयजूंषि यस्मिन्प्रतिष्ठिता रथनाभाविवाराः । यस्मिंश्चित्तꣳ सर्व्वमोतम्प्रजानान्तन्मे मनश्शिवसङ्कल्पमस्तु ॥ ९ ॥ सुषारथिरश्वानिव यन्मनुष्यान्नेनीयते भीशुभिर्व्वाजिन इव। हृत्प्रतिष्ठयूँ यदजिरञ्जविष्ठन् तन्न् मे मनश्शिवसङ्कल्पमस्तु॥ १०॥इह चेदवेदीदथ सत्यमस्ति नचेदवेदीन्महती-

शिवेन सर्व्वम्भुवनम् भूतम् भविष्यच्च वर्त्तमानेन सह परिगृहीतं तदिदं तत्वमित्यर्थः । अथ चैवन्तत्तत्त्वसाधनभूतो यज्ञोपि स्तायते स्तूयते सप्तहोता सप्तर्षयश्च प्रत्येकं स्तूयते तस्मिन्नपि यज्ञे हे शिव सदाशिव मे मनः सङ्कल्पमस्त्वित्यर्थः॥ ८ ॥ अथ दृष्टान्तपूर्व्वकमेव दर्शयन्नाह । यस्मिन्निति । एवन्तर्हि यस्मिन् रथनाभावारा इव ऋचस्सामयजूंष्यथर्व्वसहितानि प्रतिष्ठितानि यस्मिंश्च प्रजानाञ्चित्तं सर्व्वमिदमेतत्तन्मे मन इत्यादिरर्थः ॥ ९ ॥ अत्रैवार्थे पुनरपि दृष्टान्तमाह । सुखेति । तत्र तावत्सुखारथिरश्वानिव अभीशुभिर्महद्भिः सारथिभिः सह वाजिन इव यत् मनुष्यान् नेनीयते तद्वत्प्राप्यं यदजिरं जविष्ठं हृत्प्रतिष्ठन्तन्मे मनश्शिवसङ्कल्पमस्त्विति मन्त्रार्थः॥ १० ॥ नन्वेतज्ज्ञानाज्ञानयोः को विशेष इत्याह । इह चेदिति । एवन्तर्ह्यन्त-

विनाष्टिः। तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय ॥११॥ प्रजापतिश्चरति गर्भेऽन्तरजायमानो बहुधा विजायते। तस्य योनिम् परिपश्यन्ति धीरास्तस्मिन् ह तस्थुर्भुवनानि विश्वा ॥१२॥ यो देवेभ्य आतपति यो देवानाम्पुरोहितः। पूर्व्वो यो देवेभ्योजातोनमो रुचायब्राह्मये ॥१३॥

त्सदितिनिर्द्देशो ब्रह्मणस्त्रिविधस्स्मृत इत्यादिस्मृत्या तमेवात्मानं सत्यंज्ञानमनन्तम्ब्रह्मेत्यादिश्रुतिवेद्यंविदित्वा मृत्युमतिक्रम्य गच्छतीन्यर्थः। ततो नान्यः पन्था विद्यतेऽयनाय कैवल्यायेत्यर्थः यथा चर्म्मवदाकाशमित्यादिश्रुतेरिति भावः ॥११॥ ननु पूर्व्वोक्तोपासनया तत्त्वज्ञानवताङ्कीदृशङ्गांभीर्य्यमित्याह। प्रजापतिरिति। तत्र तावद्वस्तुतस्सोऽजायमानोपि तस्य विज्ञानवतो गर्भे बहुधा विजायमानः कर्म्म फलानुसन्धिः प्रजापतिश्चरतीत्यर्थः। एवन्तर्हि तस्य प्रजापतेरपि योनिं धीरा ध्यानशीलास्तादृशा मुनयः परिपश्य तीत्यर्थः। एवं सति तस्मिन्नेव तत्त्वे ह प्रसिद्धमिदञ्जगत्तत्र भुवनानि विश्वाप्रकृतिश्चेति सर्व्वाणि तस्थुरित्यर्थः ॥ १२ ॥ ननु कथम्भूतः स प्रजापतिरपीत्याह। यो देवेभ्य इति। एवं सति यः प्रजापतिर्द्देवान्प्रार्थश्यातपतीति ल्यब्लोपे पञ्चमी। अत एव च तेभ्यः पूर्व्वम्वेदानुवचनेन पुरोहितश्चेति तस्मै रुचाय तेजस्विने ब्राह्मये वेदतत्वैकशालिने नम इति मन्त्रार्थः ॥१३॥ अथैवं पूर्व्वो-

रुचम् ब्राह्मञ्जनयन्तो देवा अग्रे तद-ऽब्रुवन् । यस्त्वैवम् ब्राह्मणो विद्यात्तस्य देवा असन्वशे ॥ १४ ॥ श्रीश्च ते लक्ष्मीश्च पत्न्याव-होरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम् । इष्णन्निषाणामुम्मइषाण सर्व्वलोकम्मइषाण ॥ १५ ॥ इति रुद्रजाप्ये प्रथमोऽध्यायः ॥

परज्ञानवतस्तत्त्वदर्शिनोपि वृत्तमाह । रुचम्ब्राह्ममिति । तत्र तावत्सृष्ट्यग्रे प्रजासङ्घातं जनयन्तस्त्रिदेवा यस्त्वेवम्ब्राह्मन्तत्व-म्ब्राह्मणो विद्वांस्तस्य तत्वज्ञस्य वशे देवा अप्यसन्नित्य-ब्रुवन्नन्येषां का वार्त्तेत्याशयः ॥ १४ ॥ अथैवंविज्ञानवतः कीदृशं सामर्थ्यम्भवतीति स्पष्टंकुतो नोच्यतइत्याह । श्रीश्चत इति । एवं सति यथोक्तज्ञानवतः श्रीर्व्विद्यालक्ष्मीर्द्धनञ्च पत्न्यौ द्वे स्वाधीनेएव भवतः । एवन्तस्य सर्वात्मकत्वादहोरात्रे पार्श्वे रूपञ्च नक्षत्राणि तथाश्विनौ भक्षणार्त्थमुद्यतावधऊर्द्ध्वव्यात्तंव्यादान-मित्यर्थः । एवमेव यत्रेच्छा तत्रेषाणङ्गमनमिष्णान्निच्छं स्तिष्ठा-मीति स मन्यते । एवमेव चोमूर्ध्वलोकं मे इषाण ङ्गमनन्तद्वत्सर्व्वं लोकं मे तत्रेषाणो गमनकर्त्ता च मे मत्स्वामिक इति मन्त्रार्थः ॥ १५ ॥ इति श्रीपदवाक्यप्रमाणावारपारज्ञविप्र राजेन्द्रविरचिते रौद्रकल्पे प्रथमोऽध्यायः ॥

सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् । सभूमिꣳ सर्व्वतस् स्पृत्वा ऽत्यतिष्ठद्दशाङ्गुलम् ॥१॥ पुरुष एवेदꣳ सर्व्वं यद्भूतं यच्चभाव्यम् । उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥२॥ एतावानस्य महिमा ऽतोज्यायाँश्च पूरुषः ।

ननु यदुक्तन्दूरङ्गममित्यादि तत्कथङ्कर्म्मोपासनाभ्याम्भक्तैः प्राप्यतइत्याह । सहस्रशीर्षेति । एवन्तर्हि सहस्राणि शीर्षाण्यक्षीणि पादा वा यस्य स सहस्रशीर्षा पुरुषः स भूमिं सर्व्वतः स्पृत्वा स्तब्धीकृत्येहैव शरीरे प्रादेशमात्रे दशाङ्गुलमतिक्रम्य परिच्छिन्नभावेनापि तिष्ठतीत्यागत्य सम्मुखो भवेत्यावाहनंमन्त्रार्थः ॥ १ ॥ नन्वावाहितोहंक्वातिष्ठामित्याह । पुरुष एवेति । एवं सति " नविद्मस्तत्त्वंवयमिह हि यत्त्वं न भवसीति " स्मृत्या यद्भूतं यद्भाव्यम् वर्त्तमानम् भविष्यच्च तत्सर्व्वम्पुरुष एव पुरुषो ह वै रुद्र इत्यादि श्रुतेश्शिव एवेति कुत्र त्वां शिव स्थापयामीति चिन्तायां यतस्त्वममृतत्वस्येशानोऽतो यदिदञ्च शरीरम्पञ्चकोशात्मकमन्नेनान्नमयाद्यात्मना तिरोहाति वर्द्धते तदिदं शरीरमेव भवते समर्प्पयामीत्यासनंमन्त्रार्थः ॥ २ ॥ तत्रासनं दत्वा सर्व्वत श्चोत्कृष्टत्वेन पाद्यार्हत्वमपि तस्य दर्शयन्नाह । एतावानिति । एवन्तर्हि पादोस्य विश्वा भूतानि त्रिपाच्चावशिष्यतइत्येतावानस्य पुरुषस्य महिमातोज्यायां श्चायमिति मत्वा दिवि दिव्यवच्छेदेनामृतं यदैव्य-

पादोस्य विश्वा भूतानि त्रिपादस्यामृतंदिवि ॥३॥
त्रिपादूर्द्ध्वउदैत्पुरुषः पादोस्येहाभवत्पुनः ।
ततो विष्वङ्व्यक्रामत्साशनानशनेअभि ॥ ४ ॥
ततो विराडजायत विराजोअधिपूरुषः। सजातो-
अत्यरिच्यत पश्चाद्भूमिमथो पुरः ॥ ५ ॥
तस्माद्यज्ञात् सर्व्वहुतः सम्भृतम् पृषदाज्यम् ।

म्पाद्यन्तदासनस्थाय देवाय समर्प्पयामीत्यर्थः ॥ ३ ॥ ननु किं देशावच्छेदेनायम्पुरुषस्तिष्ठति कश्च देशस्ततोऽवशिष्यतइतितत्र संस्थाप्य तस्मै देयमर्घ्यमित्याह । त्रिपादिति । सत्यूदूर्ध्वे दिव्यदेशावच्छेदेन योयमुदैत्पुरुषो यस्यैकम्प्रपञ्चजातम्पादोऽभवत्तत्र पुनः कार्य्यात्मकं तुरीये पादे तत्राप्येकदेशावच्छेदेन विष्वक्सृष्टिभावेन साशनानशने नाशोत्पत्तिहेतवे परिच्छिन्नभावेन निमिषदित्यर्घ्यमस्मै यथात्मनीति न्यायेन तृप्त्यर्थं देयमित्यर्थः ॥ ४ ॥ नन्वर्घ्यङ्गृहीत्वा स देवः कथं स्थास्यतीत्याह। तत इति। एवं सति हिरण्यगर्भञ्जनयामास पूर्व्वं यो देवानाम्प्रभवश्चोद्भवश्चेत्यादिश्रुत्यानेकविधावताराणाम्बीजभूतो हिरण्यगर्भाद्विराडप्यजायत ततश्चाधिपुरुषः प्रजापतिरतिरिच्यते पृथग्भूतः पश्चादभूमिमथोविश्वम्पुरग्रामादिकञ्चासृजादित्यनेकावयवकशरीरत्वादर्घ्योत्तरमाचमनमपि तस्मै देयं युक्तमिति मन्त्रार्थः ॥ ५ ॥ अथ ततः परङ्किङ्करणीयमस्तीत्याह । तस्मादिति। एवं सत्त्यात्मा नदीसय्यमतोयपूर्णोतिस्मृतिन्यायेन

पशूँस्ताँश्चक्रे वायव्यानारण्यान्ग्राम्याश्च ये ॥६॥
तस्माद्यज्ञात सर्व्वहुतऋचः ससामानि जज्ञिरे ।
छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत ॥७॥
तस्मादश्वा अजायन्त ये केचोभयादतः । गावो

स्वयं स्नातोऽपि परात्मा तस्मात्सर्व्वैज्यात्सर्व्वहुतस्सर्व्वसंहारकर्त्तुस्सकाशादिदम्प्रपञ्चजातम्पृषत्पृथग्भूतन्तदप्याज्यं हवनीयमिति कृत्वा यज्ञार्थमेव वायव्यानाकाशस्थानारण्यान्ग्राम्यान्पशूनपि चक्रे तत्पानीयार्थञ्च सरित्तडागादिकमप्यपेक्षितमितिकृत्वा प्रथमंबाह्यभावेनापि त्वयैव स्नातव्यमिति युक्तमित्यर्थः ॥ ६ ॥ नन्वस्त्वेवरूपरन्तु निरवच्छिन्नस्यात्मनः कथमाच्छादनन्देयमित्याह । तस्मादिति । एवन्तर्हि यतस्त्यक्तम्प्रमोहेन त्रयीसम्वरणम्त्वथेत्यादिस्मृतिन्यायेनास्य देवस्य वेदान्तर्ग्गतत्वे युक्ते तस्माद्यज्ञात् सर्व्वहुतः परमशिवादृचस्सामानि छन्दांसि यजुस्तदङ्गानि च जज्ञिर इत्येषामपि वेदाऽन्तर्ग्गतत्वेन प्रतिपादनाद्वस्त्रादिकमपि सम्वरणार्थन्तस्मै देवाय बाह्यवृत्त्यापि देयं युक्तमित्यर्थः ॥ ७ ॥ नन्वेवम्पश्वादीनामपि वेदान्तर्ग्गतत्वात्ततश्च परात्मनि विशेषं दर्शयितुं ब्रह्मसूत्रधारित्वमपि देवस्य युक्तमित्याह । तस्मादिति । एवं सति यद्यप्येतेऽश्वास्तथोभयत आददतइत्युभयादतस्तथा परिच्छेत्तुं याताविितिस्मृत्यैकपदोन्ये गावो माहिष्याद्याश्च जज्ञिरइत्येषामपि वेदान्तर्ग्गतत्वन्तथापि भवतः परब्रह्मरूपत्वाद्ब्रह्मसूत्रधारित्वमपि

ह जज्ञिरे तस्मात्तस्माज्जाता अजावयः ॥ ८ ॥
तं यज्ञम्बर्हिषि प्रौक्षन् पुरुषञ्जातमग्रतः । तेन
देवा अयजन्त साध्या ऋषयश्च ये ॥ ९ ॥
यत्पुरुषं व्यदधुः कतिधा व्यकल्पयन् । मुख-
ङ्किमस्यासीत्किम्बाहू किमुरू पादा उच्यते ॥ १० ॥
ब्राह्मणोऽस्य मुखमासीद् बाहू राजन्यः कृतः ।

सगुणभावेन युक्तामिति मन्त्रार्थः ॥ ८ ॥ अथ ततोपि किङ्क-रणीयमस्तीत्याह । तं यज्ञमिति । एवन्तर्हि यो हिरण्यगर्भ-ञ्जनयामास तमेव, पुरुषो ह वै रुद्र इत्यादि श्रुतेर्यज्ञोपवीत-धारित्वेन यज्ञपुरुषम्बर्हिषि बर्हिषागन्धात्तताभ्याम्प्रोक्षन्नग्रतो जातं हिरण्यगर्भम्विद्धीति तेन सह देवास्साध्या ऋषयश्चायज-न्तेति सर्वतो गरिष्ठं सदाशिवं जज्ञिरइति युक्तं शिवाय गन्धाक्षते समर्पणीयेइति मन्त्रार्थः ॥ ९ ॥ ननु ततः किन्देयमस्तीत्याह । यत्पुरुषमिति । एवं सति यद्यस्मात्परात्मा शिवः पुरुषाख्यं हिरण्यगर्भं व्यदधु स्सोपि ब्राह्मणादीं श्चतुर्वर्णांस्तदन्यांश्च कतिधा व्यकल्पयन्नासीदिति मुखन्तस्य किमासीदित्यादि त्रिधात्मकसृष्टिविभागस्य दर्शनात्त्रिदलम्बिल्वपत्रमपि तस्मै सम र्पणीयामित्यर्थः ॥ १० ॥ ननु बिल्वपत्रोत्तररूपुष्पाण्यपि देयानीत्याह । ब्राह्मणोऽस्येति । एवन्तर्ह्यस्य हिरण्यगर्भस्य मुखं मुपामिति ङसेस्सुरादेशे मुखाद्ब्राह्मणा आसीदित्यर्थः । एवम्बाहू

ऊरूतदस्य यद्वैश्यः पद्भ्या ँ शूद्रो अजायत ॥ ११ ॥
चन्द्रमा मनसो जातश्चक्षोस्सूर्य्यो अजायत ।
श्रोत्राद् वायुश्च प्राणश्च मुखादग्निरजाय-
त ॥ १२ ॥ नाभ्या आसीदन्तरिक्ष ँ शीर्ष्णो-
द्यौस्समवर्त्तत । पद्भ्याम्भूमि र्दिशश् श्रोत-
त्रात्तथा लोका ँ अकल्पयन् ॥ १३ ॥ यत्पु-
रुषेण हविषा देवा यज्ञमतन्वत । वसन्तोस्या-

इति बाहुभ्यां राजन्यः क्षत्रियः कृतो जात इत्यर्थः । एवमेव तदस्योरू इ यूरुभ्यां वैश्यः पद्भ्यांच शूद्रोप्यजायतेति सृष्टि-विभागे तत्तत्क्रियाकौशल्येन शूद्रगृहात्पुष्पमाहृत्येश्वराय समर्प्पणीयमित्यर्थः ॥ ११ ॥ नन्वतः परं विराजोधिपुरुषात्कस्तर्हि जातः किञ्च करणीयमस्तीत्याह । चन्द्रमा इति । एवं सति तस्य विराजोधिपुरुषस्य मनश्चन्द्रमा जात इत्यर्थः । एवञ्चक्षो श्चक्षुषस्सूर्य्यः श्रोत्राद्वायुः पञ्चधा तत्तद्भेदैर्दशधा प्राणश्च । एवम्मुखाच्चाग्निरजायतेति वैश्यगृहादष्टगन्धेन सह योगाद्धूपोयम्प्रतिगृह्यतामित्यर्थः ॥ १२ ॥ एवन्ततः परङ्कथङ्किन्देयमस्तीत्याह । नाभ्या इति । एवन्तर्हि नाभ्यास्सकाशादन्तरिक्षमासीच्छीर्ष्णोश्च द्यौस्समवर्त्तत पद्भ्याम्भूमिर्द्दिशश्श्रोत्राच्छ्रोत्रेन्द्रियाणिच तथा तैस्सह मिलित्वेमाँल्लोकानकल्पयदिति तदवलोकनार्थं दीपमप्यपेक्षितामिति भावः ॥ १३ ॥ अथ सर्व्वपूजोपकरणं नैवेद्यमपि देयं युक्तामित्याह । यत्पुरुषेणेति ।

सीदाज्यङ्ग्रीष्म इध्मश्शरद्धविः ॥ १४ ॥ सप्ता-
स्यासन् परिधयस्त्रिस्सप्तसमिधः कृताः। देवा
यद्यज्ञंतन्वाना अबध्नन्पुरुषम्पशुम् ॥ १५ ॥
यज्ञेन यज्ञमयजन्त देवास्तानि धर्म्माणि प्रथ-

एवं सति यद्यस्मात्पुरुषेण हिरण्यगर्भाख्येन कृत्वा देवा अपि हविषा यज्ञमतन्वतेति तत्र यज्ञोपकरणमेव कैवल्ये किमस्तीत्यप्याह। वसन्त इति। एवन्तर्ह्यस्य यज्ञस्योपकरणेष्वात्मानि स्वप्रकाशाग्नौ होतव्यं सकलं जगन्नित्याग्निहोत्रसंज्ञोयं सर्व्वाशासंक्षयो यत इतिन्यायेन वसन्त एवाज्यं ग्रीष्मश्चेध्म इन्धनं शरच्च हविरित्यन्तरात्मनि निष्कले शिवे मंत्रेणानेन सर्व्वं हुतमिति बाह्यवृत्याप्यनेन नैवेद्यन्देयंयुक्तमित्यर्थः ॥१४॥ ननु के तर्हि कैवल्याग्निहोत्रस्याहवनीयस्य कुण्डस्य परिधय इत्याह। सप्तास्येति। तत्र तावत्सप्त द्वीपाः परिधय उपधाना आसन्नित्यर्थः। एवं सप्त लोकास्त्रिविधगुणभेदैनैकविंशतिसमिधः कृतास्सफला इत्यर्थः। ननु कैस्तर्हि पूर्व्वमिदमनुष्ठितमित्याह। देवा इति। एवन्तर्हि यद्यज्ञं विराड्रूपम्पुरुषाख्यम्पशुमबध्नन्देवा यज्ञमेतादृशमतन्वानास्तादिदं सर्व्वैरपि कर्त्तव्यमिति मातर्म्मोदिनि तात मारुतसख इति न्यायेनान्त्यः प्रणामाञ्जलिरित्यन्तर्व्वृत्योक्तमिति बाह्यतोपि तथात्वं युक्तमिति मन्त्रार्थः ॥१५॥ नन्वन्तर्य्यागबहिर्य्यागौ गृहस्थस्सर्व्वदा चरेत् कैवल्यार्थी फलार्थी वा त्वन्यथा रौरवं व्रजेदिति पर्य्यवसिते सति तदुभयङ्कर्त्तव्यामित्याह। यज्ञेनेति। एवं सति यज्ञेन

मान्यासन् । ते ह नाकम्महिमानस्सचन्तयत्र पूर्वे साध्यास्सन्ति देवाः ॥ १६ ॥ अद्भ्यस् सम्भृतः पृथिव्यै रसाच्च विश्वकर्म्मणस् समवर्त्तताग्रे । तस्य त्वष्टा विदधद्रूपमेति तन्मर्त्यस्य देवत्व माजानमग्रे॥१७॥इति रुद्रजाप्ये द्वितीयोऽध्यायः॥

विराडात्मना पुरुषेण कृत्वा ब्रह्मार्प्पणन्यायेन यज्ञं देवा अयजन्त इति यज्ञधर्म्माणि प्रथमानि प्रधानान्यासन्नित्यर्थः । एवन्तर्हि तान्येव बाह्यवृत्त्यापि तइमे मनुष्याः कुर्व्वाणा ह नाम प्रसिद्धं नाकं स्वर्ग्गम्प्राप्य महिमानो महत्त्वम्प्राप्ता यत्र सचन्ते सन्नद्धा स्सन्तः पूर्व्वे देवा स्साध्या ऋषयश्च सन्तीति तल्लोकस्यात्यन्तप्रकाशविषयत्वात्कर्प्पूरादिना नीराजनमपि देवाय युक्तमित्यर्थः ॥ १६ ॥ एवन्तर्ह्यत्र षोडशोपचारम्प्रदर्श्य त्र्यम्बकमित्यत्रोर्व्वारुकमिवेति श्रुतिन्यायेनेहामुत्र फलसिद्धिप्रयोजकमाह । अद्भ्य इति । एवं सत्यद्भ्यो रसो रसाच्च पृथिवी पृथिव्यै तत्पालनाय च विश्वकर्म्मेश्वरस्ततश्च सर्व्वं समवर्त्तताग्रे तस्य चेश्वरस्य सत्वेन त्वष्टेन्द्रो विदधद् बृहत्तरंरूपमेति तत्तस्मान्मर्त्यानां यथोचितयज्ञादिकर्म्मणां देवत्वम्भवत्याजानं देवरथम् प्राप्याग्रगण्य इत्यत्राजानो कृत्या कैवल्यं स्वर्ग्गफलम् वा देवम् प्रदक्षिणीकृत्य गच्छेदिति तात्पर्य्यम् ॥१७॥ इति श्रीपदवाक्यप्रमाणपारावारपारङ्गविप्रराजेन्द्रविरचिते रौद्रकल्पे द्वितीयोऽध्यायः ॥

आशुश्शिशानो वृषभो न भीमो घनाघनः क्षोभणश्चर्षणीनाम् । सङ्क्रन्दनो निमिष एक वीरश्शत ँ सेना अजयत् साकमिन्द्रः ॥ १ ॥ स इषुहस्तैः सनिषङ्गिभिर्व्वशी स ँ स्रष्टा स युध इन्द्रो गणेन । स ँ सृष्टजित्सोमपा बाहुशर्ध्युग्रधन्वा प्रतिहिताभिरस्ता ॥ २ ॥ बृहस्पते परिदीयारथेन रक्षोहामित्रा अपबाधमा

अथ पूर्व्वोक्तशिवोपासनया बहुभ्यः स्वाभीष्टं फलं प्राप्तमित्याह । आशुरिति । एवं सति यत्प्रसादादासमन्तात्स्वशत्रुसैन्यान्यश्नातीत्याशुरिन्द्रः स चर्षभः श्रेष्ठो ऽतश्च शिशानस्तेजस्वान्स च पुनश्चर्षणीनाम् प्रबलानामपि न भीमोपि घनाघनः क्षोभणः स च पुनर्य्यत्प्रसादान्निमिषमात्रे सङ्क्रन्दनो गर्ज्जमानस्सन्नेकं एव वीरो भवति यतश्शत्रुभिस्साकं शतं सेना अप्यजयदित्यर्थः ॥ १ ॥ अथ स एव पुनः शिवप्रसादं विना कथम्भूतो बभूवेत्यप्याह । स इषुहस्तैरिति । एवन्तर्हि स एवेन्द्रो निषङ्गिभिर्युक्तामुक्तन्तदुभयं यन्त्रञ्चातुर्व्विधन्धनुरिति स्मृतिन्यायेन मन्त्रप्रयोगादिना वशी चेत्तेन सह जगतां संस्रष्टा स्वयमिन्द्रोपि स्वीयगणेन सह युधो युध्यमानोपि प्रतिहिताभिरस्ता यत्प्रसादम् विना पलायमानो बभूवेत्यर्थः ॥ २ ॥ अथ च तत्प्रसादादेव महेन्द्रादि

नः । प्रभञ्जन्त्सेनाः प्रमृणेषुधा जयन्नस्माकमेध्यविता रथानाम् ॥ ३ ॥ बलविज्ञाय स्थविरः प्रवीरस्सहस्वान्वाजी सहमान उग्रः । अभिवीरोऽभिसत्वासहोजा जैत्रमिन्द्ररथमातिष्ठगोवित् ॥ ४ ॥ अगोत्रभिदङ्गोविदम्वज्रबाहुञ्जयन्तमज्मः प्रमृणन्तमोजसा । इम ँ सजाता अनुवीरयध्वमिन्द्र ँ

देवानाङ्गुरुर्बृहस्पतिरपि प्रबलो बभूवेत्याह । बृहस्पत इति । हे बृहस्पते आरथेन महता रथेनायुधम् परिदीय गृहीत्वा स्वीयवर्गान् ग्राहयित्वा च रक्षोहा भव तथैवामित्राणामपबाधमानश्च भवेत्यर्थः । एवम् प्रमृणेषुधा नाम धनुः प्रमृज्य रक्षसां सेनाः प्रभञ्जँस्ता जयँश्चास्माकं रथानामविता च सँस्त्वमेधीति मन्त्रार्थः ॥ ३ ॥ अथ स पुनः कथम्भूत इत्याह बलविज्ञायेति । हे बलविज्ञाय प्रख्यातबलविशिष्ट त्वमिन्द्रादिदेवानां स्थविरो वृद्धः प्रकृष्टवीर्य्यवाँश्च पुनश्च तस्य तव सहस्वान्वाजी स्वयञ्च सहमानः पुनरत एवोग्रः पुनराभितस्सर्वेषान्देवानाम् वीरः प्रबलस्सचेन्द्रियापारवश्येन गोवित्ततश्चाभिसत्वा सहौजा हे बृहस्पते त्वं जैत्रमिन्द्ररथ मातिष्ठेत्यर्थः ॥ ४॥ एवमिन्द्रादप्याधिक्येन बृहस्पतिं पुनस्सम्पूजयन्नाह । अगोत्रभिदमिति । तथा च भविष्यन्तीन्द्राशीक्षिताइत्यादिशापोक्त्यनन्तरं व्यस्तैः पृष्टेथ कस्त्वम् भो तवात्मेत्याह वज्रभृत् क्रुद्धात्मवादिनो दृष्ट्वा सहस्राणां शिरोच्छिनादित्यादिस्मृत्युक्तेरगो-

सखायोनुस ँ रभध्वम् ॥ ५ ॥ अभिगोत्राणि सहसा गाहमानोदयोवीरश्शतमन्युरिन्द्रोदुश्च्यवनः पृतनाषाडूयुध्यो स्माकमवतु प्रयुत्सुः ॥ ६ ॥ इन्द्र आसां नेता बृहस्पतिर्द्दक्षिणा यज्ञः पुर एतु सोमः । देवसेनानामभिभञ्जतीनाञ्जयन्तीनाम्मरुतो यन्त्वग्रम्म् ॥ ७ ॥ उद्धऋषयो मघ-

त्रभिदं च्युतगोत्रभिदं यतो गोविदं पुनश्च वज्रवाहुमजोऽञ्जसा स्वशत्रुं जयन्तम् पुनश्च प्रमृणन्तम् प्रमृज्यमानमोजसेतीमामिन्द्रं समानरथत्वेनसत्वं याता सन्महत्वेनानुवीरयध्वं नामेन्द्रसखा योयं स त्वमेतादृशस्सन्मदर्थे संरभध्वामित्यर्थः ॥ ५ ॥ एवं स्वकार्य्यसिद्धयर्थं देवगुरोः प्राबल्यं दर्शयित्वेन्द्रस्यापि प्राबल्यं दर्शयन्नाह । अभिगोत्राणीति । एवन्तर्हि च्युतगोत्रहन्तापीन्द्रो मर्त्त्यजनान्प्रति दययोत्कर्षेण वीरो भूत्वा वैदिकगोत्राण्यभिगोत्राणि सहसा परिश्रमेण गाहमानो रक्षमाणास्तिष्ठतीत्यर्थः । अथ स एवेन्द्रश्शतमन्युर्दुश्च्यवनो दुर्द्धर्षः पृतनाषाट् सैन्यानाम् वेगं सहमानो युद्ध्यो युध्यमानस्सन्नस्माकं सेना अवतु तथाप्रयुत्सुः प्रेरयिष्णुर्भवेति मंत्रार्थः ॥ ६ ॥ ननु देवैस्सह तयोः किङ्करणीयमस्तीत्याह । आसामिति । एवन्तर्हीन्द्र आसां मदीयसैन्यानां नेता भवतु तथा दक्षिणायायजतीति दक्षिणायज्ञो बृहस्पतिः पुरोऽग्रे एतु तथा सोमो देवोऽभिभञ्जतीनां शत्रूञ्जयन्तीनां सेनानाम् वेगं मदर्थे रक्षतु एवमग्रं सैन्याग्रम्

वन्नायुधान्यु त्सत्वानाम्मामकानाम्मना ँसि । उद्धत्रहन्वाजिनाश्वाजिनां न्युद्रथानां जयन्तां यन्तु घोषाः ॥ ८ ॥ इन्द्रस्य वृष्णो वरुणस्य राज्ञ आदित्यानां मरुता ँशर्द्ध उग्रम् । महामनसाम् भुवनच्च्यवानाङ्घोषो देवानाञ् जयतामुदस्थात् ॥ ९ ॥ अमीषाञ्चित्तम्प्रतिलोभयन्तु गृहाण्यङ्गान्यपरेहि । अभिप्रेहि निर्द्दह हृत्सु

मरुतोपि गच्छन्तो रक्षन्त्वित्यर्थः ॥ ७ ॥ तथा स्त्रार्थमपीन्द्रंपुनः प्रार्थयन्नाह । उद्धेति । हेभगवन्नुद्धत्रहन्न्युत्सत्त्वानां मामकानामायुधान्मनांसि च जयन्तामितीन्द्रम् प्रति प्रार्थनेत्यन्वयः । एवम् वाजिनाम् त्वाजिनाङ्क्षथम्भूतानामुद्रथानामुद्धन्नृषयो हप्रसिद्धमेवोत्कर्षयन्त्वित्यर्थः ॥ ८ ॥ नन्वस्माकम्भक्तानाम् विजयार्थं शिवाज्ञया पुनरिन्द्रादयः किङ्कुर्व्वन्त्वित्याह । इन्द्रस्येति। एवं सति वृष्णोर्व्वर्षणशीलस्येन्द्रस्य राज्ञो वरुणस्यादित्यानाञ्च मरुतां महामनसाम्भुवनच्यवानां देवानामुग्रं यथा स्यात्तथा शर्द्धो हिंसनशीलो घोष उदस्थात्पुरस्ताज्जायतामिति मन्त्रार्थः॥९। अथापरमपि स्वस्य रक्षणार्थम् वृत्तमाह । अमीषामिति । हे इन्द्र त्वद्वर्ग्गानुगता अपरे देवा अप्यमीषां शत्रूणाञ्चित्तम् प्रतिलोभयन्तु हि यतस्तथाङ्गानि तेषाङ्गृहाण्यप्यभिप्रेहि स्वाधीनत्वेन प्रेरय एवन्तेषां हृत्सु हृदवच्छेदेन शोकैर्न्निर्दह भस्मीकुरु एवम्

शोकैरन्धेन मित्रास्तमसा सचन्ताम् ॥ १० ॥ असौ या सेना मरुतः परेषामभ्येति न ओजसा स्पर्द्धमाना । ताङ्गूहत तमसाऽपव्रतेन यथामी अन्योऽन्यन्न जानन् ॥ ११ ॥ यत्र बाणास्सम्पतन्ति कुमारा विशिखा इव । तन्न इन्द्रो बृहस्पतिरदितिश्शर्म्म यच्छतु विश्वाहा शर्म्म यच्छतु ॥ १२ ॥ मर्म्माणि ते वर्म्मणाच्छादया-

मित्राश्शत्रवो ये तानन्धेन तमसा सचन्तां समाच्छादयेत्यर्थः ॥ १० ॥ एवन्तर्हि शिवाज्ञया किमस्माभिर्देवैः कर्त्तव्यमित्याह । असाविति । हे देवा भवतां यासावसौ सेना सानेकरूपेण मरुतो मरुद्वती सती परेषां शत्रूणामभ्यैति न तु तेषां सैन्यमस्माभिस्सहौजसा स्पर्द्धमाना भवतु प्रत्युत तामेव परसेनां यूयंगूहत अथ च तमसापव्रतेन स्वसैन्यबलेन समाच्छादयतेत्यर्थः । यथामी शत्रवोऽन्योन्यं स्ववर्गभेदगतिमजानँ स्तिष्ठन्तीति तथा यूयं कुर्वन्त्विति मन्त्रार्थः ॥ ११ ॥ ननु कथमस्मिन्सम्भृते सङ्ग्रामे इन्द्रादयो रक्षन्त्वित्याह । यत्रेति । तत्र तावद्यत्र महाभारतादौ कुमारा नव्या विशिखाश्शिखाञ्जिता बाणा सम्पतन्ति रक्षिताश्च ततो भवन्ति तद्वदिहापि नोऽस्मानिन्द्रो बृहस्पतिरादितिश्च शर्म यच्छतु एवं भीषास्माद्वातः पवते भीषोदेति सूर्य्य इत्यादिश्रुतिबोध्यो विश्वाहाकालरुद्रोऽपि शर्म यच्छन्त्वित्यर्थः ॥ १२ ॥ अथ साङ्गाय सपरिवारायेति स्मृतिन्यायेनापेरापि

मि सोमस्त्वं राजामृतेनानुवस्ताम् । उरोर्व्वरीयो वरुणस्तेकृणोतु जयन्तन्त्वा नु देवा मदन्तु॥१३॥

इति रुद्रजाप्ये तृतीयोध्यायः ॥

विभ्राड् बृहत्पिबतु सोम्यं मद्ध्वायुर्द्दध-द्यज्ञपतावविह्रुतम् । वातजूतो योऽभिरक्षति त्मना प्रजाः पुपोष पुरुधा विराजति ॥ १ ॥ उदुत्यञ्जातवेदसन्देवं वहन्ति केतवः । दृशे

रक्षन्त्वित्याह । मर्माणीति । हे इन्द्रादयो देवा मर्माणि नो वर्मणाच्छादयाम इति रीत्या प्रत्येकं रक्षन्तु एवन्तत्र सङ्ग्रामे मृतान् जीवयितुमपि सोमस्त्वं राजा अमृतेनानुवस्ताम् तथोरसा वरीयो वरुणोपि ते सैन्यङ्कृणोतु वर्द्धयतु । एवं जयन्तन्त्वामनु पश्चात्तएव देवा मदन्त्विति मन्त्रार्थः ॥ १३ ॥ इति श्रीपदवाक्यप्रमाणावारपारज्ञविप्रराजेन्द्रविरचिते रौद्रकल्पे तृतीयोध्यायः ॥

अथ सङ्ग्रामे मृतेभ्यस्सोमयज्ञस्य फलमपि दर्शयति । विभ्राडिति । तत्र तावत्सोम्यं सोमयागावशेषं पिबतु चेन्मर्त्यस्तर्हि बृहद्विभ्राड भवत्वित्यर्थः । एवं यज्ञपतावपि निश्चयेन ह्रुतेञ्चन्मध्वमृतमायुर्द्दधदित्यत्र रुडागमश्छान्दसः । अथैवं यज्ञकर्त्ता त्मना वातजूतस्सन्प्रजा अभिरक्षत्यत्रात्मनेत्याकारलोपश्छान्दसः तथेह पुरं स्वर्लोकं दधातीति पुरुधा सन्विराजतीति मन्त्रार्थः १ ननु च स कीदृशस्सन्विराजतइत्यप्याह । उदुत्यमिति । एवं

विश्वाय सूर्य्यम् । येनापावकचक्षसे भुरण्यन्त-
ञ्जनाँ अनु । त्वम्वरुण पश्यसि ॥ २ ॥ दैव्या-
वध्वर्य्यू आगत ᳪ रथेन सूर्य्यत्वचा । मध्वा यज्ञ ᳪ
समञ्जाथे । तम्प्रक्नथायं वेनाश्चित्रन्देवानामु-
दगात् ॥ ३ ॥ चित्रन्देवानामुदगादनीकञ्च

सति विश्वाय विश्वस्य दृशे दर्शनायोत्कर्षेणोत्सम् विस्तृतं जात-
वेदसं देवं सूर्य्यङ्केतवो रश्मयो वहन्तीत्यर्थः । तथा येन विना
पावकोऽपावकश्चक्षसे एवन्तमेव भौमदिव्यौदर्य्याकर्यचतुर्वि
धोपलब्धिहेतुत्वेन जनानाम्भुरण्यम् पोषकम् विद्यादित्यर्थः ।
अत एवाग्नेराप इति श्रुतिन्यायेनानु पश्चाज्जलाधिपम् वरुणा-
मपि पश्यसीत्यर्थः ॥ २ ॥ अथैवमेव सौर्य्यञ्चरुं निर्वपेद्ब्रह्मवर्च्च-
सकाम इत्यादि श्रुतिवेद्ययज्ञाङ्गयोरध्वर्योर्महिमानमप्याह ।
दैव्याविति । एवन्तर्हि सौर्य्ये लोके दैव्यौ दिव्यदेहधराव-
ध्वर्य्यू सूर्य्यन्त्वचामध्वामधुवत्प्रियतन्वागतम् पश्य यतस्तौ यज्ञं
समञ्जाथे तदङ्गत्वेन प्राप्नुत इत्यर्थः । ननु कोऽस्ति यज्ञाद्विमुख
इत्यत्र धर्मोपदेशहेतवे वक्ष्यमाणामाख्यायिकामप्याह । तमिति ।
तत्र तावत्तम् प्रकर्षेण क्नथयतीति प्रक्नथायस्तम् प्रक्नथायं
यज्ञविमुखो वेनो भूपतिः प्राप्स्यतीति तं यज्ञघ्नम् ब्रह्मघ्नम् मत्वा
तत्सदृशम् वान्यं देवानाघ्नन्तीति तेषाञ्चित्रमुदगादिति यतेर्दीक्षा-
तिथेर्दीक्षा दीक्षावैच्युतगोत्रिणाम् । वर्णाधमानां या दीक्षा सा
दीक्षा निरयप्रदेत्यादिभारतस्मृतिरप्युपपन्ना भवतीति वेद्यम् ॥

क्षुर्म्मित्रस्य वरुणस्याग्नेः । आप्राद्यावापृथिवी अन्तरिक्ष ँ सूर्य्य आत्मा जगतस्तस्थुषश्च ॥ ४ ॥ तत्सूर्य्यस्य देवत्वन्तन्महित्वम्मध्याकर्त्तो र्व्विततँ सञ्जभार । यदेदं युक्ता हरितः सदस्थाद्रात्रीवासस्तनुते सिमस्मै ॥ ५ ॥

३ ॥ अथ सौर्य्ययज्ञप्रसङ्गेन तस्य सूर्य्यस्य स्वरूपलक्षणमप्याह । चित्रमिति । असौ सूर्य्यो मित्रस्य वरुणस्याग्नेस्त्रयाणां देवानाञ्चित्रं यथा स्यात्तथा चक्षुस्सन्नुदगादुदितोऽभवदित्यर्थः । अथ च पुनस्तदतिरिक्तदेवानामनीकं समूहरूपो भवति एवं स्वेन रश्मिजालेन द्यावापृथिवीञ्चान्तरिक्षं स्वर्गमर्त्याकाशं वाप्रा आपूरितवानितिरुडागमश्छान्दसः । अथ पुनः कीदृशो जगतो जङ्गमस्य तस्थुषस्स्थावरस्य पर्वतादेश्चात्मेति स्थावरजङ्गमात्मकसकलसंसारप्रयोजकोयमेवेत्यर्थः ॥४॥ ननु कस्मादित्थं महिमानम्प्राप्तोयमित्याह । तदिति । एवन्तद्ब्रह्मोन्तत्सदितिनिर्द्देशो ब्रह्मणस्त्रिविधस्स्मृत इतिस्मृत्या तस्य देवस्य परब्रह्मणो महिम्नोस्य सूर्य्यस्यापि देवत्वन्तन्महित्वञ्चागतमित्यवधार्य्यम् । अत एव च मध्ययोर्भूर्भुवर्लोकयोराकर्त्तुरासमन्तात्प्रकाशयितुस्सकाशाद्विततं सञ्जभार यदेदञ्जगदित्यन्वयः । अस्मादेव च हरितोहरिद्भावेन भूमिर्युक्ता सती सदस्थादित्यर्थः यतस्सिमस्मै लोकाय सौख्यमदात्तत एव च त्रिषु लोकेषु मर्त्यो वासस्तनुते विस्तारयतीति मन्त्रार्थः ॥ ५ ॥ अथ सर्वभावेनाय-

आयन्त इव सूर्य्यं विश्वेदिन्द्रस्य भक्षतः । वसूनिजाते जनमान ओजसा प्रतिभागं नदीधिमः ॥ ६ ॥ अद्य देवा उदिताः सूर्य्यस्य निरꣳहसः पिपृता निरवद्यात । तन्नो मित्रो वरुणो मामहन्तामदितिस्सिन्धुः पृथिवी उत द्यौः ॥ ७ ॥ आकृष्णेन रजसा

मेव जगताम् प्रयोजक इति पुनराह । आयन्तइति । हे सूर्य्य वृष्टिसाङ्कुल्येन वसूनि धान्यधनानि च भक्षतइन्द्रस्यानेकरूपेण भवन्त एवाश्रयन्तइतिप्रतीत्या सर्वोपि जनस्त्वत्त एव श्वसेदित्यर्थः । यतस्त्वं जनमाने जनावधिपर्य्यन्ते त्वयि जाते उदिते सत्योजसा प्रतिभागं न दीधिमः किन्तु समस्तभागेन त्वमेव प्रापकइति जानीम इत्यर्थः ॥ ६ ॥ अथ तावद्बाह्यप्रभावं दर्शयित्वा सर्वशरीरत्वेनान्तरमपि दर्शयन्नाह । अद्येति । अद्यास्मिन् शरीरे कृष्णताराग्रवर्त्तित्वेन निरंहसोनिर्वेगस्य सूर्यस्य सत्तया देवा इन्द्रियान्तराण्यप्युदितानि सन्ति पिपृतानि तृप्तानीत्यर्थः । एवन्तत्तस्मान्नोस्माकमद्वैतमान्तरं लिङ्गं शीर्षण्यम् प्राणिजीवनमिति स्मृतेर्घण्टिकायाङ्गतस्सन्वरुणोपि मामवद्यादित्यर्थः । तथा नोस्माकमहन्तामदितिर्घण्टिकास्थलिङ्गोद्भवजलप्रदत्वेन सिन्धुर्हृदयम् पृथिवी उतानन्तरमुदरञ्च द्यौश्चावद्यादिति मन्त्रार्थः ॥ ७ ॥ एवं बाह्यत्वेन पृथिव्यादीन्द्रियविषयानपि

वर्त्तमानो निवेशयन्नमृतं मर्त्यञ्च । हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन् ॥ ८ ॥ इति रुद्रजाप्येचतुर्थोध्यायः ॥

नमस्ते रुद्रमन्यव उतोत इषवे नमः । बाहुभ्यामुतते नमः । या ते रुद्र शिवा तनूरघोरा पापकाशिनी । तया नस्तन्वा

त्वत्त एवेति दर्शयन्नाह । आकृष्णेनेति । एवन्तर्हि यदादित्ये शुक्लंन्तदपां यत्कृष्णान्तत्पृथिव्या इत्यादि बृहदारण्यकश्रुत्या कृष्णेन पृथिव्यादिगतेन रजसा वर्त्तमानोऽमृतम् मर्त्यम् विषञ्च तत्रानिवेशयन्भवानेवास्तइत्यर्थः । एवं हिरण्ययेन हिरण्यरूपेण सविता देवो भुवनानि पश्यन्नासमन्ताद्यातीत्यर्थः ॥ ८ ॥ इति श्रीपदवाक्यप्रमाणावारपारज्ञविप्रराजेन्द्रविरचिते रौद्रकल्पे चतुर्थोध्यायः ॥

अथेह भगवतो रुद्रस्य सर्व्वरूपत्वादनेकरूपेण तन्नमस्कारानप्याह । नमस्त इति तत्र तावद्रोदयत्येव यस्सर्वान् स्वस्मिन्भक्तिविवर्ज्जितानित्यादिस्मृत्या हे रुद्र भीषास्माद्वातः पवतइत्यादिश्रुतेर्मन्यवे तत्र मन्युस्सर्वसंहारजनकःप्रलयाग्निस्तद्रूपाय नमस्तथोतस्तदनन्तरन्ते तव सर्वसंहारकर्त्तुरिषवे धनुर्द्धरत्वेन बाहुभ्याञ्चतेनम इत्यर्थः। तथाशक्तः किङ्करिष्यतीति न्यायेनाप्याह। यात इति । हे रुद्र याते शिवार्द्धनारीत्वेन तनूरघोरा सा मश-

शन्तमया गिरिशन्ताभिचाकशीहि ॥ १ ॥ अध्यवोचदधिवक्ताप्रथमो दैव्योभिषक्। अहींश्च सर्व्वाञ्जम्भयन्सर्व्वाश्च यातुधान्यो धराचीः परासुव ॥ २ ॥ असौ यस्ताम्रोऽरुण उत बभ्रुः सुमङ्गलो येचैन ँ रुद्रा अभितो दिक्षु श्रिता-

कार्थोधूम इतिवत्पापकाशिनी तन्निवर्तिनीत्यर्थः। एवन्तर्हि नोस्माकन्तया तन्वा शन्तमया गिरौ सर्वसंहारान्ते शेतइत्यर्थे हे गिरिशन्ताभिचाकशीहि प्रकाशयेति गायत्र्यर्थो दर्शितः॥१॥ ननुकेवलं संहारकर्त्तैव न त्वमपि तु सर्वजगतां जीवनभूतोपि त्वमेवेति स्पष्टं दर्शयति। अध्यवोचादिति। एवं सति देवेभ्य इन्द्रियेभ्यो हितो दैव्यो वक्त्रमधिकृत्य वर्त्ततइत्यधिवक्त्रं जिव्होपरिभागे लिङ्गरूपतया प्रथमः प्रधानो यतस्सर्वम्वाङ्मयमध्यवोचत्सर्वेभ्यश्च रसान्भक्तस्य जिव्हाग्रादश्नामि कमलोद्भव इत्यादिस्मृत्या रसप्रदत्वाद्भिषक् चेत्यर्थः एवमेव सर्वनाड्यवयवामहीं सुषुम्णाञ्च जम्भयंस्तल्लिङ्गन्तिष्ठतीत्यर्थः। अन्यथा तु यथापरास्वापि वसुमतीषु जीवजातयो यातुधान्य एव धरामञ्चन्तीति कृत्वा धराचीरेव साधारण्येन ताः पश्यति मंत्रार्थः॥२॥ ननु केन रूपेण देवोत्रविशेषतस्तिष्ठतीत्याह। असाविति। एवन्तर्ह्यसौ यो नाभ्यान्ताम्रस्तमसायुक्तश्श्यामवर्णो विष्णुर्ध्येयः। यश्च रजसा युक्तोऽरुणो रक्तो ब्रह्मा स हृदये ध्येयः उतानन्तरं यस्सात्त्विको बभ्रुश्शुक्लस्सुमङ्गलश्शिवे जिव्होपरिभागे स

स्सहस्रशो वैषा ५ हेडईमहे ॥ ३ ॥ नमोस्तु नीलग्रीवाय सहस्त्राक्षाय मीढुषे । अथोबसेऽस्य सत्वानो हन्तेभ्यो करवन्नमः । प्रमुञ्चधन्वानस्त्वमुभयोरक्योंर्ज्यांमू । याश्चते हस्तइषवः पराताभगवोवप ॥ ४ ॥ विज्यन्धनुः कपर्दिनो

ललाटे ध्येयः एवमेकोप्येकादशाकृतिरित्यादिस्मृत्यैकादशेन्द्रियाधिपा एकादश रुद्रा अभितो दिक्षुश्रिता आश्रिता स्सन्तश्चैनं महारुद्रं सेवन्तइत्यर्थः एवमन्येपि सहस्रशो वैषान्तदनुचरीभूतास्सन्तीति तान्हेडयीमहे नमस्कर्तुम्प्रत्येकशोन शक्नुम इति मन्त्रार्थः॥ ३ ॥ अथ त्रयीमयाय त्रिगुणात्मधारिणइत्यादिस्मृत्यादित्याभेदे स्थिते चन्द्रार्काग्निविलोचनामित्यादि स्मृत्या चादित्यस्यापि परमशिवाङ्गत्वमेवेति सर्वाभेदेन सदाशिवमेव नमस्कुर्वन्नाह । नमोस्त्विति । तत्र तावन्नीलन्तमोविषंवा गृणातीति नीलग्रीवस्तस्मै नीलग्रीवाय सकलतमोपहर्त्रे नीलकण्ठाय वेत्यादिरर्थः एवं सर्वौषधीसिञ्चनकर्तृत्वेन मीढुषे सर्वजगताम् प्रकाशकर्तृत्वेनोपसे चेत्यर्थः । एवमेवास्य प्रकाशको यस्सत्वानस्सत्वगुणयुक्तो महारुद्रस्तथा यथोक्ता ये तदनुचरीभूतास्सहस्रशो रुद्रास्तेभ्योपि नमो नमस्कारमकरवामित्यर्थः । एवं सति प्रमुञ्चद्धनुर्यस्येत्यर्थात्प्रमुञ्चद्धन्वा त्वं नोस्माकं रक्षणायोभयोर्द्धनुरक्योर्ज्याम् प्रसार्य्य ये च ते हस्ते इषवो बाणा याश्च ताः पराधनुर्ज्ज्यास्तैस्ताभिश्च हे भगवो नोऽस्माकं

विशल्यो बाणवा २ उतानशन्नस्ययाइषवआभु-
रस्यनिषङ्गधिः । यातेहेतिर्मीढुष्टमहस्तेबभूवतेध-
नुस्तयास्मान्विश्वतस्त्वमयक्ष्मयापरिभुजम् ॥५॥
परितेधन्वनोहेतिरस्मान्वृणक्तु विश्वतोऽथोयइषु-
धिस्तवारेऽस्मन्निधेहितम् । अवतत्यधनुष्ट्व २
सहस्राक्ष शतेषुधो निशीर्य्य शल्यानां मुखा
शिवोनस्सुमना भव ॥ ६ ॥ नमस्तआयुधानां

क्लेशान् शत्रूँश्च वप विनाशयेति मन्त्रार्थः ॥ ४ ॥ नन्विदानी-न्तत्तत्क्लेशानिवृत्तौ समरान्ते वा किङ्करणीयमस्तीति समापयन्नाह । विज्यन्धनुरिति । एवन्तर्हि कपर्दिनो महादेवस्य विज्यम् प्रसारितन्धनुर्विशल्यश्शक्त्यङ्कुशादिर्वा बाणो वा उत सर्वक्लेशानिवृत्त्यनन्तरमस्य धान्विनोऽनशन्नाशमप्राप्तये इषवो स्याभूरेकत्रीभूय निषङ्गधिर्भवती यर्थः । एवं हे मीढुष्टम वृषभ-ध्वज यातेहेतिस्तयास्मान्विश्वतोऽयक्ष्मरक्ष ययाचपरिभुजन्धनु-राख्याहेतिस्तामप्ययक्ष्मरक्षयेति मन्त्रार्थः ॥ ५ ॥ अथ समरोप-रान्तेऽपरमपि वृत्तमाह । परित इति । हे देव तव धन्वनो हेतिर्विश्वतो वृणक्तु परिवृत्य रक्षात्वित्यर्थः । अथोनन्तरं हे वीर स्ववर्गेभ्योपरे तवापि य इषुधिस्तमस्मभ्यं निधेहीति ब्रुवन्विज-यानन्तरं युद्धमुपसंहरेत्याशयः । एवं हे सहस्राक्ष धनुस्त्वमव-तत्य विसृज्य शतेषुधिं निशीर्य्य तत्रेषुधौ शल्यानां मुखं प्रवेश्य नोस्माकं शिवस्सन्सुमना भवेत्यर्थः ॥ ६ ॥ एवं विजयानन्तरं

ततायधृष्णवे उभाभ्यामुतते नमो बाहुभ्यान्तव धन्वने। मानोमहान्तमुतमानोऽर्भकम्मान उक्षन्तमुतमान उक्षितम् ॥ ७ ॥ नमो गणेभ्यो गणपतिभ्यश्च वो नमो नमो व्रातेभ्यो व्रातपतिभ्यश्च वो नमो नमो गृत्सेभ्यो गृत्सपतिभ्यश्च

पुनस्सदाशिवं नमस्करोति। नमस्तइति। हे शिव आयुधानान्तताय विस्तारकर्त्रे धृष्णवे शत्रूणां धर्षणशीलाय नम इत्यर्थः। एवं जगद्गुरुरूपत्वादुभाभ्यां बाहुभ्यामपि ते तुभ्यन्धन्वने शस्त्रधारिणे नम इत्यर्थः। एवं सेव्यो वा सेवको वापि त्वत्तो नान्योस्ति कश्च नेति स्मृतिन्यायेनात्मार्प्पणमपि कुर्वन्नाह। मान इति। हे भगवन्महान्तं वसुदेवादिवद्वृद्धमर्भकं बालकं वा अथ वोक्षन्तं बालपशुमुतवोक्षितं वृद्धपशुं वा मन्यसे चेत्कथमपि मन्यतामिति तवैवाधीनोस्मीति मम बुद्धिरवधिरिति मन्त्रार्थः ॥ ७ ॥ ननु परिच्छिन्नभावेन साङ्गाये-त्यादिरीत्या सदाशिवः पूजितोपि सर्व्वभावेनापि सम्पूजनीय इत्याह। नमो गणेभ्य इति। एवं सति गणेभ्यो जनसङ्घातेभ्यस्तत्पतिभ्यस्तन्नायकेभ्यश्च वो युष्मभ्यं नमः पुनरपि नमः। तथा व्रातेभ्यः खलेभ्यस्तत्पतिभ्यश्च वो युष्मभ्यं नम इत्यादिरर्थः। एवङ्गृत्सेभ्यो लीप्सावद्भ्यस्सस्यापि धने धनाकाङ्क्षागार्द्धन्तद्विशिष्टत्वात्तत्पतिभ्यश्च वो युष्मभ्यमित्यादिरर्थः। तथा विरूपेभ्यो विगतरूपेभ्यः विश्वरूपेभ्यस्सकलरूपवद्भ्यश्च

वो नमो विरूपेभ्यो विश्वरूपेभ्यश्च वो नमो नमः ८ नमः कपर्द्दिनेच व्युप्तकेशाय च नमः सहस्राक्षाय च शतधन्वने च नमो गिरिशाय च शिपिविष्टाय च नमो मीढुष्टमाय चेषुमते च नमः ॥ ९ ॥ नमः कूप्याय चावट्याय च नमोवीध्यायचातप्याय च नमोमेध्याय च विद्युत्याय च नमोवर्ष्याय चावर्ष्याय च नमः ॥ १० ॥ नमश्शङ्कवेचपशु-

वोयुष्मभ्यमित्यादिरर्थः ॥ ८ ॥ अथैवम्भावेनापि पुनराह । नमः कपर्द्दिन इति । एवन्तर्हि विशेषेणोप्ताः प्रक्षिप्ताः केशा यस्य स व्युप्तकेशस्तस्मै व्युप्तकेशाय कपर्द्दिने च नम इत्यर्थः । तथा सहस्राण्यनेकान्यक्षीणि यस्य स तस्मै । एवं शतमनेकानि धनूंषि यस्य स तस्मै तथा गिरौ सर्व्वसंहारान्ते शेतइति गिरिशस्तस्मै एवं शिपिश्शीघ्रगतिमद्वाहनम्विष्टमासनं यस्य तस्मै तथा मीढुष्टमाय वृषभासनाय च नम इत्यादिरर्थः ॥ ९ ॥ कूप्यायेति । तत्र तावत्सुवर्णरजताभिन्नन्धनङ्कुप्यन्तस्मा अन्नाद्भवन्तिभूतानीत्यादिस्मृत्यापि कूप्याय सुवर्णादिबीजभूताय भवते नम इत्यर्थः । एवमवटशब्दो गर्ग्गादिस्तमर्हतीत्यावट्यश्शास्त्रपारगस्तस्मै तथा विध्यत्यनेनेति वीध्यं महाशस्त्रन्तस्मै । एवमातप्यते शत्रुर्य्येन तस्मै महास्त्राय तथा मेध्यन्त्यनेन जानाइति मेध्यमृतन्तस्मै एवमविन्धनम्विद्युत्तद्रूपाय वर्षणशीलाय तद्भिन्नाय च नम इत्यर्थः ॥ १० ॥ शङ्कवइति । तत्र तावच्छङ्कवे सर्व्व-

पतयेचनमउग्रायचभीमायच नमोऽग्रेवधायचदूरे-
वधायचनमोहन्त्रे चहनीयसेचनमोवृक्षेभ्योहरि-
केशेभ्योनमः ॥ ११ ॥ नमश्शम्भवाय च
मयो भवाय च नम श्शङ्कराय च नमस्करशाय
च नमश्शिवाय च शिवतराय च नमः ॥ १२॥

जगतां मूलभूताय एवं मायापाशनिबद्धत्वाद्ब्रह्माद्याः पशव-
स्स्मृताइत्यादिस्मृत्या तद्रूपाणाम्पशूनाम्पतये तथोग्राय प्रच-
ण्डाय महद्भयम्वज्रमुद्यन्तमित्यादिश्रुत्यापि भीमाय च । एवमग्रे
दूरे च सर्व्वत्रावस्थितत्वात्त्वमेव सर्व्वजगताम्वधावधकर्म्मणि
प्रवर्त्तको निवर्त्तकश्चेति तस्मै तथा हन्त्रे हननकर्त्रे हनीयसे
हन्यमानाय साक्षिणे च नमः । एवं सर्व्वसाक्षितयैव वृक्षेभ्य-
श्छिद्यमानेभ्यो हरिस्सिंहस्तद्वत्केशा येषान्तेभ्योपि प्रत्येकं यथा
स्यात्तथा नम इति मन्त्रार्थः ॥ ११ ॥ शम्भवायेति । तत्र
तावच्छङ्कल्याणंतस्य भव उत्पत्तिर्य्यस्मात्तस्मै नम इत्यर्थः ।
एवम्मयस्सुखं सर्व्वजनसौख्यन्तस्य भवो यस्मात्तस्मै तथा न
कस्याप्युन्नत्यै भवति शिरसस्त्वय्यवनतिरित्यादिस्मृत्यापि
भवते किम्वक्तव्यमित्याह । नमस्करायेति । एवन्तर्हि
नमस्क्रियते सर्व्वैर्य्यस्स नमस्करस्तस्मै एवंसति सर्व्वलोकानां
शिवोऽतिशयेन कैवल्यरूपशिवप्रदत्वेन शिवरूपश्च त्वमेव तस्मै
शिवाय शिवतराय च भवते नम इतिमन्त्रार्थः ॥ १२ ॥ अथ
रोदयत्येव यस्सर्व्वान्स्वस्मिन्भक्तिविवर्ज्जितानित्यादिस्मृत्यात-

द्रापे ऽन्धसस्पते दरिद्रन्नीललोहित। आसाम्प्रजा-
नामेषां पशूनामाभेर्मा रोङ्मोचनः किञ्चनाम
मत् ॥ १३ ॥ इमे रुद्रा ये तपसे कपर्द्दिने
क्षयद्वीराय प्रभरामहे मतीः । यथा शमदुर्द्विपदे
चतुष्पदे विश्वे पुष्टङ्ग्रामेऽस्मिन्ननातुरम् ॥१४॥
मीढुष्टमशिवतम शिवोनः सुमनाभव । परमे

द्विमुखानाम्वृत्तमप्याह । द्रापइति । तत्र तावद्द्राति द्रापयति
वा यस्तस्मिन्द्रापे कुत्सिते जने त्वन्यत्रदृव्यवहारस्ससस्पतेशिवो
न भासतइत्यर्थः । एवं सति ता एव दरिद्रेण नीललोहितास्तस्माः
प्रजा भवन्तीत्यासाम्प्रजानान्तथैषाम्पशुसदृशाम्बोधयितुमश-
क्यत्वादाभेर्ज्जन्मपर्य्यन्तं शिवोमारोङ्मोचनः क्लेशनिवर्त्तको
भवति किञ्च किन्तु तत्तेषां जातस्य जायमानस्येति स्मृतिन्या-
येन नाममात्रम्व्यर्त्थमेव तेषां जीवनमित्यर्थः॥ १३ ॥ अतस्तदर्थं
किङ्कुर्म्म इत्याह । इम इति । एवन्तर्हि कपर्द्दिने तपसे तपोहे-
तवे क्षयद्वीराय प्रबलशत्रुशमनाय इमे ये रुद्रास्तेभ्यस्त्वीयानां
मतीः प्रभरामहे धारयामहइत्यर्थः । एवं सति हे रुद्रा यूयं द्विपदे
मनुष्ये चतुष्पदे पशौ विश्वे देशे ग्रामे वास्मिन्ननातुरं स्थिरं
यथास्यात्तथा शङ्कल्याणम्पुष्टम्प्रबलमदुरिति प्रार्थनोति मन्त्रार्थः
॥ १४ ॥ एवं सदाशिवस्य वर्ग्गीभूतान् रुद्रगणान्सम्प्रार्थ्य तमपि
प्रार्थयन्नाह । मीढुष्टम इति । एवन्तर्हि मिहम्वृष्टिपोपरि वसतीत्यु-
भयत्र क्विप्यन्येषामपि दृश्यतइति पूर्व्वपदस्य दीर्घे ढत्वे च

वृक्ष आयुधन्निधाय कृत्तिम्वसान आचर पिना-
कम्बिभ्रदागहि ॥ १५ ॥ असङ्ख्यातास्सहस्राणि
ये रुद्रा अधिभूम्याम् । तेषा ँ सहस्रयोजनेवध-
न्वानि तन्मेस्तु ॥ १६ ॥ अस्मिन्महत्यर्णवेऽन्त-
रिक्षे भव अधि । तेषा ँ सहस्रयोजनेवधन्वानि
तन्मेस्तु ॥ १७ ॥ ये तीर्थानि प्रचरन्ति

मीढुर्व्वृषारूढस्सदाशिवस्सोप्यतिशयेनेत्यर्थे ह्रस्वात्तादाविति षत्वे हे मीढुष्टम शिवतम नोस्माकं शिवो भव सुमना भव प्रसन्नो भवेत्यर्थः ॥ एवमिह हे शिव परमे प्रकृष्टे वृक्षे छेदनशीले मदीये दुःखे प्राप्ते तन्निवृत्त्यर्थमायुधं निधाय कृत्तिवासा भूत्वापि नाकम्बिभ्रत्सन्नागहिकस्तङ्कृत्वा यथायुक्तन्तथाचरेत्यर्थः ॥ ॥ १५ ॥ ननु कैस्सह मदर्थे सन्नद्धो भवेति तानप्याह । असङ्ख्याता इति । हेभगवन्नसङ्ख्याता भूम्यामधिकृत्य ये सहस्राण्यनेकशो रुद्रास्तेषां सहस्रयोजने सहस्रयोजनत्वावच्छेदेन विस्तृतानां धन्वानि धनूंषि तत्तस्मान्मदर्थे तैस्सह भवानास्त्वित्यर्थः ॥ १६ ॥ अथ निरावलम्बस्य ममावलम्बमिति स्मृतिन्यायेनाप्याह । अस्मिन्निति । हेभगवन्नस्मिन्भवे संसारे महत्यर्णवे दुरुद्धरे ऽन्तरिक्षे निरालम्बेऽधिकृत्य वर्त्तमानोहङ्किङ्करिष्यामीति तेषां सहस्रयोजनइत्यादिमन्त्रार्थः ॥ १७ ॥ अथ ये वाह्यवृत्तयस्तवानुगा निरालस्यास्तानपि मदर्थे प्रेरयेत्याह । येतीर्थानीति । तत्रैवं सति ये स्रकहस्ताश्श-

सृकहस्ता निषङ्गिणः । तेषा ँ सहस्रयोजने-
वधन्वानि तन्मेस्तु ॥ १८ ॥ नमोस्तु रुद्रेभ्यो
ये पृथिव्यां येषामन्नमिषवस्तेभ्यो दशप्राचीर्द-
शदक्षिणादश प्रतीचीर्दशोदीचीर्दशोर्ध्वास्तेभ्यो
नमोस्तु ते नोवन्तु ते नोमृडयन्तु ते यं द्विष्मो
यश्च नो द्वेष्टि तमेषाञ्जम्भे दध्मः ॥ १९ ॥
इति रुद्रजाप्ये पञ्चमोध्यायः ॥

क्तिहस्तास्तीर्थादिपर्य्यटनशीला निषङ्गिणश्शस्त्रधारिणः प्रच-
रन्ति तेषामपि सहस्रयोजनत्वावच्छेदेन विस्तृतानां धन्वानि
धनूंषि तत्तस्मान्मे मदर्थन्तैस्सह भवानास्त्वित्यर्थः ॥ १८ ॥
अथोपसंहरन्नप्याह । नमोस्त्विति । एवन्तर्हि ये पृथिव्याम्पृथि-
व्यवच्छेदेन रुद्रास्तेभ्यस्सर्व्वेभ्योपि नम इत्यर्थः । एवं येषामि-
षव एवान्नम्भक्षणकर्तॄ तेभ्योपि नम इत्यर्थः । एवमेव ये दश
प्राचीर्दिशः प्रति व्याप्तास्सन्तास्तिष्ठन्ति तथा ये च दश दक्षिणा
दिशः प्रतिव्याप्य तिष्ठन्ति एवं ये दशप्रतीचीर्दशोदूर्ध्वाश्च दिशः
प्रतिव्याप्य तिष्ठन्ति तेभ्योपि रुद्रेभ्यो नमोस्त्वित्यर्थः । एवं
सति ते रुद्रा नोस्मानवन्तु रक्षन्तु पुनश्च ते नो मृडयन्तु सुख-
यन्तु ततश्च यम्वयं द्विष्मो यश्च नोस्मान्द्वेष्टि तत्तस्मादेषां
शत्रूणां जम्भे जृम्भणमात्रे सति दध्मस्स्तम्भनरूपेण धारयाम
इति मन्त्रार्थः ॥१९॥ इति श्रीपदवाक्यप्रमाणावारपारज्ञवि-
प्रराजेन्द्रविरचिते रौद्रकल्पे पञ्चमोध्यायः ॥

न तम्विदाम य इमानजानन्यद्युष्माकमन्तरम्बभूव । नीहारेण प्रावृता जल्प्याश्चासुतृप उक्थश्वासश्चरन्ति ॥ १ ॥ त्र्यम्बकं यजामहे सुगन्धिम्पुष्टिवर्द्धनम् । उर्वारुकमिवबन्धनान्मृ-

अथ य एवं न वेद किमृचा स करिष्यतीति श्रुत्यन्तर न्यायेनाप्याह । न तम्विदाम इति । तत्रैवंसति यः पुरुषस्तं सदाशिवमजानन्निमान् रुद्रानप्यजानंस्तिष्ठति तं न विदाम न जानीमः कीदृशोयं मन्द इत्यर्थः । अथ कस्माद्धेतोस्तत्राह । यदिति । यद्यस्मात्सङ्गादस्माकं शिवेनान्तरम्बभूव स मन्दः कोपि नेत्यर्थः। अथ च कइव ते मन्दा भवन्तीत्याह। नीहारेणेति तत्र तावन्नीहारेण यथा प्रावृतां जना नादित्यम्पश्यन्ति एवन्ते जल्प्याः कथनमात्रेणैव मनुजाः पुनश्च तेचासुतृपः प्राणमात्र-धारिण एव भस्त्रिकेवोक्थश्वासश्चरन्तीत्यर्थः ॥ १ ॥ अथ धिग्भस्मरहितम्भालन्धिग्ग्राममशिवालयमित्यादिश्रुत्यापि प्रति-मायाःपूज्यत्वे सत्याह । त्र्यम्बकमिति । तत्र तावत्प्रतिवक्त्र-न्त्रीण्यम्बकानि नेत्राणि यस्य तं सदाशिवं यजामहइत्यर्थः । तथा तङ्कथम्भूतं शोभना गन्धा यशांसि यस्य तमित्यर्थः । एवमिहामुत्रं कैवल्यफलैर्ज्जगताम्पुष्टिवर्द्धनमित्यर्थः । नन्वेवङ्कर्म्मेन्द्रियाणि संय्यम्य य आस्ते मनसा स्मरन्नित्यादिस्मृत्या प्रकृतिं यान्ति भूतानि निग्रहः किङ्करिष्यतीत्यादिस्मृत्या च त्यागस्य दुरुद्धरत्वं मन्यमानो दृष्टान्तेनोद्धरन्नाह। उर्वारुकमिवेति।

त्योर्मुक्षीयमामृतात् ॥ २ ॥ त्र्यायुषञ्जमदग्नेः कश्यपस्य त्र्यायुषम् । यद्देवेषु त्र्यायुषन्तन्नोऽस्तु त्र्यायुषम् ॥ ३ ॥ अग्निरिति भस्म वायुरिति भस्म जलमिति भस्म स्थलमिति भस्म व्योमेति भस्म सर्व्वꣳ ह वा इदम्भस्म मन एतानि सर्व्वेन्द्रियाणि चक्षूंषि भस्मानि तस्माद्व्रतमेतच्छाम्भवम्पशुपाशविमोक्षणाय ॥४॥ तत्पुरुषाय

तत्र तावद्यथोर्व्वारुकङ्कर्कटीफलम्परिपक्वोत्तरं स्वयमेव त्यजति तद्वच्छे शिव मामपीह सर्व्वाभीष्टम्प्रदर्श्य मृत्योर्जन्ममरणादिवन्धनान्मुक्षीय मा न त्वमृतादित्यर्थः ॥२॥ ननु विना भस्मत्रिपुण्ड्रेणेत्यादि स्मृत्या त्रिपुण्ड्रादेरावश्यकत्वे स्थिते केन धृतं धारयाम इत्याह । त्र्यायुषमिति । एवं सति जमदग्नेः कश्यपस्य देवेषु च तैर्धृतं धृत्वा त्र्यम्वकमित्यादिमन्त्रेण सदाशिवम्पूजयेदिति मन्त्रार्थः ॥ ३ ॥ ननु ये भस्मधारणन्त्यक्त्वा कर्म्म कुर्व्वन्ति मानवाः स्तानानयन्तु नरकेष्वतिघोरेषु यत्नत इत्यादिस्कान्दस्मृत्या सर्व्वेषु शुभकर्म्मसु भस्मधारणस्यावश्यकत्वे स्थिते केन मन्त्रेण तर्हि भस्मग्रहणङ्कुर्य्यादित्याह । अग्निरिति । एवं सति पशूनां मायापाशनिवद्धानां यत्पाशमिहामुत्रगतन्दुःखन्तस्य विमोक्षाय यद्यस्य व्रतस्यावश्यकत्वमेव तस्माद्व्रतमेतच्छाम्भवं देवासुरैस्सर्व्वैरप्यनुष्ठितङ्कर्त्तव्यमित्यर्थः ॥ ४ ॥ नन्वस्त्वेवम्परन्तु केन

विद्महे महादेवाय धीमहि तन्नो रुद्रः प्रचोदयात् ॥५॥ अघोरेभ्योऽथघोरेभ्यो घोरघोरतरेभ्यस्स-र्व्वतश्शर्व्वसर्व्वेभ्यो नमस्तेऽस्तु रुद्ररूपेभ्यस्स्वाहा ॥४॥ सद्योजातम्प्रपद्यामि सद्योजाताय वै नमः।

मन्त्रेण तत्कास्मिन्नङ्गे कर्त्तव्यमित्याह । तत्पुरुषायेति । एवन्तर्हि क्रमात्तत्पुरुषाघोरसद्योवामेशनाभिः भालांसोदरवक्षस्सु क्राग्भि-स्ताभिस्तु धारयेदिति स्मृत्या स्थाननियमस्यावश्यकत्वे स्थिते स चासौ पुरुषश्च तत्पुरुषस्तस्मै तत्पुरुषाय तत्पुरुषप्राप्त्यर्थम्वि-दूमहे वेत्तुमिच्छामीत्यर्थः । एवं महादेवस्वरूपाय तत्पुरुषाय प्राप्तिहेतवे धीमहि ध्यायामस्तत्तस्मात्तदर्थं नोस्माकमन्तःकरणा-न्तपश्चरणादिकर्म्मसु सर्व्वेन्द्रियाधीशो रुद्रः प्रचोदयात्प्रेरये-दिति मन्त्रार्थः॥५॥ ननु पञ्चविधेषु ब्रह्ममन्त्रेषु यदुच्यतेऽघोरा-भापरो मन्त्र इति स कीदृशो मन्त्र इत्याह । अघोरेभ्य इति । एवन्तर्ह्यघोरेभ्यश्शुद्धरूपेभ्यस्तथा सर्व्वसाक्षितया घोरेभ्योऽशुद्ध रूपेभ्यस्ततोपि निकृष्टरूपेभ्यस्सर्व्वतो हे शर्व्व सर्व्वेभ्यो भवते रुद्ररूपेभ्यो नमस्तेस्त्विति सर्व्वङ्किल्बिषजातं त्वय्येव सर्व्वा-त्मनि स्वाहा जुहोमीत्यर्थः ॥ ४ ॥ ननु कथम्भूतस्त्वं यतस्स-र्व्वन्त्वय्येव जुहोमीत्याह । सद्योजातामीति । एवंसति तद्दूरे तद्वदन्तिके तदुसर्व्वस्य वाह्यत इत्यादिश्रुत्यापि सर्व्वत्र विद्यमा-नत्वात्सद्योजातम्प्रपद्येतस्सद्योजाताय वै नम इत्यर्थः एवम्भवे जन्मन्यभवेन कैवल्येन रूपेणातिभवे पुनःपुनर्ज्जन्मानि वा

भवेऽभवे नातिभवे भवस्व माम्भवोद्भवायनमः॥५॥
वामदेवाय नमो ज्येष्ठाय नमश्श्रेष्ठाय नमो
रुद्राय नमः कालाय नमः कलविकरणाय नमो
बलविकरणाय नमो बलप्रमथनाय नमस्सर्व्व-
भूतदमनाय नमो मनोन्मनाय नमः ॥ ६ ॥
ईशानस्सर्व्वभूतानामीश्वरस्सर्व्वदेवानाम्ब्रह्माधि-
पतिर्ब्रह्मणोऽधिपतिर्ब्रह्माशिवोमे ऽस्तु सदाशि-

माम्भवस्व प्राप्नुहीति भवोद्भवाय सर्व्वथा सर्व्वात्मना नम इत्यर्थः ॥५॥ ननु कथं देवस्य सर्व्वात्मत्वमित्याह । वामदेवायेति एवंसति वामभागे उमा देवी विष्णुस्सोमोपि ते त्रय इत्यादिश्रु-त्यापि वामे देवा यस्य स तस्मै वामदेवाय नमः एवं सर्व्वतः पूर्व्वम्विद्यमानत्वाज्ज्येष्ठाय ब्रह्मविष्ण्वादिभिस्सर्व्वैः पूज्यत्वाच्च श्रेष्ठाय नम इत्यर्थः । एवं कालः कालकरो हर इत्यादिस्मृत्त्या कालाय कलविकरणाय तन्निवर्त्तकायेति छान्दसोत्र दीर्घाभावः एवं नमो वलविकरणाय वलप्रदाय नमो वलप्रमथनाय तन्ना-शनाय तथा नमस्सर्व्वभूतदमनाय मनोन्मनाय मनोविनाश-नाय कैवल्यप्रदाय च रुद्राय नमो ममानन्यदेवत्वात्पुनःपुनर्न्नम इति मन्त्रार्थः ॥ ६ ॥ ननु ब्रह्ममन्त्रेषु कीदृशः पञ्चमो मन्त्र इत्याह । ईशान इति । एवं सति सर्व्वभूतानामीशानो नियन्ता त्वमेवेत्यर्थः । तथा सर्व्वदेवानामीश्वरोपि त्वमेवेति सर्व्वदेवा-

वोम् ॥ ७ ॥ उग्रं लौहित्येन मित्र ँ सौव्रत्येन शत्रुन्दौर्व्रत्येनेन्द्रं प्रक्रीडेन मरुतो बलेन साध्या-न्प्रमुदाभवस्य कण्ठ ँ रुद्रस्यान्तःपार्श्वम्महादे-वस्य यकृच्छर्व्वस्य वनिष्ठुः पशुपतेः पुरीततम् ॥८॥ पयः पृथिव्याम्पय ओषधीषु पयोदिव्यन्तरि क्षे पयोधाः पयस्वतीः प्रदिशस्सन्तु मह्यम्

धिपतित्वान्महादेवेत्युच्यते एवम्ब्रह्मा हिरण्यगर्भस्तस्याधिप-तिर्ब्रह्मणोवेदस्याप्यधिपतिरिति ब्रह्मापि त्वमेवेति सर्व्वरूप-त्वात्वत्तो मे मह्यं शिवोस्त्विति हे सदाशिव ओमित्येकाक्षर-म्ब्रह्मापि त्वमेवेति मन्त्रार्थः ॥ ७ ॥ ननु स्नानं सन्ध्या जपो होमो देवतानाञ्च पूजनमातिथ्यं वैश्वदेवञ्च षट् कर्म्माणि दिने दिनइत्यादिस्मृत्या षट्कर्म्माणि कुर्व्वन्कथम्भावेन महायज्ञ-ङ्कुर्य्यादित्यभिप्रेत्योपसंहरन्नाह । उग्रमिति । तत्र तावदुग्रा-ख्यन्देवं लौहित्येन तीव्रान्तःकरणेन मित्रं सौव्रत्येन शत्रुं दौर्व्र त्येन तथेन्द्रम्प्रक्रीडेन मरुतो बलेन साध्यान्प्रमुदा प्रमोदेना-वष्टभ्य भवस्य कण्ठं समर्प्य रुद्रस्योभयतोन्तःपार्श्वे महादेवस्य यकृत्सर्व्वस्वं शर्व्वाख्यस्य शिवस्य वनिष्ठं सर्व्वबलम्पशुपतेश्च पुरीततं समर्प्य सर्व्वं यज्ञान्तङ्कर्म्म कुर्य्यादित्यर्थः ॥ ८ ॥ ननु यज्ञशिष्टाशिनस्सन्तो मुच्यन्ते सर्व्वकिल्बिषैर्भुञ्जते तेत्वघम्पापं ये पचन्त्यात्मकारणादित्यादिस्मृत्या यज्ञस्याव-श्यकत्वे स्थिते तत्फलस्याप्यावश्यकत्त्वन्दर्शयन्नाह । पयः

॥ ९ ॥ अग्निर्देवता वातो देवता सूर्य्यो देवता चन्द्रमा देवता वसवो देवता रुद्रो देवतादित्यादेवता प्रजापतिर्देवता विश्वेदेवा देवता बृहस्पतिर्देवतेन्द्रो देवता विष्णुर्देवता ॥ १० ॥ इति रुद्रजाप्ये षष्ठोऽध्यायः ॥

वाजश्च मे प्रसवश्च मे प्रयतिश्च मे प्रसिति·

पृथिव्यामिति। एवन्तर्हि कृते यज्ञे तत्तद्देवैः कृतम्पृथिव्याम्पयोमृतं मह्यमस्त्वित्यर्थः। एवमोषधिष्वापि पयोमृतं दिव्यन्तरिक्षे च तादित्यर्थः। तथा पयस्वतीस्सरिद्वरापि पयो वा मह्यमस्तु एवम्प्रदिशोपि मह्यम्पयांसि सन्त्वित्यर्थः। ननु के तर्हि देवा यत्र महादेवपदाभिधेयत्वं सदाशिवस्येत्यभिप्रेत्य तानेव संक्षेपेण दर्शयन्नुपसंहरति। अग्निर्देवतेति। एवं सति यावन्तो देवास्त्वयि जातवेदस्तिर्य्यञ्चो घ्नन्ति पुरुषस्य कामास्तेभ्यो हम्भागधेयं जुहोमि ते मा तृप्तास्सर्वैः कामैस्तर्प्पयन्तु स्वाहेत्यादिश्रुत्याप्यग्नेस्सर्वदेवमुखत्वञ्चन्द्रार्काग्निविलोचनंस्मितमुखमित्यादिस्मृत्त्या चाग्नेश्शिवनेत्रत्वे स्थिते तत्पादग्राह्यत्वमपिपरम्परयापिसर्व्वेषांसिद्धमिति तात्पर्य्यार्थः ॥ १० ॥ इति श्रीपदवाक्यप्रमाणावारपारज्ञात्रिमराजेन्द्रविरचिते रौद्रकल्पे षष्ठोऽध्यायः ॥ ६ ॥

ननु यज्ञार्थात्कर्म्मणोन्यत्र लोकोयङ्कर्म्मबन्धनस्तदर्थं

श्च मे धीतिश्च मे क्रतुश्च मे स्वरश्च मे श्लो-
कश्च मे श्रवश्च मे श्रुती च मे ज्योति-
श्च मे स्वश्च मे यज्ञेन कल्पन्ताम ॥ १ ॥
ओजश्च मे सहश्च मआत्मा च मे तनू च
मे शर्म्म च मे वर्म्म च मेऽङ्गानि च मे
स्थीनि च मे परूꣳषि च मे शरीराणि च म-

कर्म्मकौन्तेयमुक्तसङ्गस्समाचरेत्यादिस्मृत्या कैवल्यार्थिभिरपि ब्रह्मार्प्पणन्यायेन कर्म्मकर्त्तव्यमेवेत्याह । वाजश्चम इति । तत्र तावत्सञ्चारःपदयोःप्रदक्षिणविधिस्स्तोत्राणि सर्व्वागिरोयदूय-त्कर्म्मकरोमितत्तदखिलं शम्भो तवाराधनमिति स्मृतिन्यायेन वाजोगमनादिक्रियापि यज्ञार्था यज्ञश्च शिवार्थमेवेति प्रसवो जन्मप्रयतिर्म्मनोव्यापारः प्रसितिर्व्विस्तारोधीतिर्धा-रणा क्रतुर्य्यज्ञक्रिया स्वरश्चोदात्तादिश्लोकः प्रसिद्धएव श्रवः श्रवणंश्रुतीकरणौ ज्योतिर्भौमादिव्यौदर्य्याकर्य्यभेदन चतुर्व्विधं स्वःस्वर्गश्चेति सर्व्वं मे यज्ञेन यज्ञात्मना कल्पन्तां सङ्क-ल्पन्तामित्यर्थः ॥ १ ॥ एवमपरमप्याह । ओजश्चमइति । तत्र तावदोजो बलं सहस्सहिष्णुता तथात्मा जीवात्मा तनू शरीरद्वयं शर्म्मवर्म्मादिब्राह्मणादिसञ्ज्ञा तथाङ्गानि मुखादि-प्रत्येकमङ्गानि तथास्थीनि शल्यानि परूꣳषि पुरुषार्थता तथा शरीराणि त्रिविधान्यायुरायुर्बलं जराच मे सर्व्वं यज्ञेन यज्ञा-

आयुश्च मे जरा चमे यज्ञेन कल्पन्ताम् ॥ २ ॥ ज्येष्ठञ्च मआधिपत्यञ्च मे मन्युश्च मे भामश्च मे मध्यमश्च मे जेमा चमे महिमा च मे वरिमा च मे प्रथिमा च मे वर्षिमा च मे द्राघिमा च मे वृद्धश्च मे वृद्धिश्च मे यज्ञेन कल्पन्ताम् ३॥ यन्ता च मे धर्त्ता च मे क्षेमश्च मे धृतिश्च मे विश्वञ्च मे महश्च मे सम्विच्च मे ज्ञात्रञ्च मेऽसुश्च प्रसूश्च मे सीरञ्च मे लयश्चमे यज्ञेन कल्पन्ताम् ॥ ४ ॥ प्राणश्च मेऽपानश्च मउ-

त्मना कल्पन्तां सङ्कल्पन्तामिति मन्त्रार्थः ॥ २ ॥ अपरमप्याह । ज्येष्ठञ्चम इति । तत्र तावज्ज्येष्ठत्वङ्कालकृतन्तद्विशिष्टमित्यर्थः । तथाधिपत्यं स्वामित्वं मन्युर्यज्ञःक्रोधश्च भामः प्रियोमध्यमस्साधारणो जेमा जयिष्णुः महिमा महत्वम्वरिमा वरिष्ठः प्रथिमा स्थूलो वर्षिमा वृषो द्राघिमा दीर्घो वृद्धो गरिष्ठो वृद्धिराधिक्यमित्यादि सर्व्वं यज्ञेन मे मदर्थङ्कल्पन्तामित्यर्थः ॥ ३ ॥ अपरमप्याह । यन्ता चमइति । तत्र तावद्यन्ता सारथिर्धर्त्ता ऋणी क्षेमः कल्याणं धृतिर्द्धारणा विश्वञ्जगन्महस्तेजस्सम्वित् ज्ञानञ्ज्ञात्रञ्ज्ञानमसुः प्राणं छान्दसमेकत्वम्प्रसूः प्रसूतिः सीरं हलप्रवहनादि लयस्सुषुप्तिरित्यादि सर्व्वं यज्ञेन मदर्त्थङ्कल्पन्तामित्यर्थः ॥ ४ ॥ अपरमप्याह । प्राण-

दानश्च मे व्यानश्च मे समानश्चमे ऽसुश्च मे चित्तञ्चम अधीतञ्च मे वाक् च मे मनश्च मे चक्षुश्च मे श्रोत्रञ्च मे इन्द्रियाणि च मे बलञ्च मे यज्ञेन कल्पन्ताम् ॥ ५ ॥ सत्यञ्च मे श्रद्धा च मे जगच्च मे धनञ्चमे विश्व-ञ्चमे महश्चमे क्रीडा च मे मोदश्च मे जातं च

श्चमइति । तत्र तावन्नाभिदेशगः प्राणः कण्ठदेशगश्चोदानो व्यानस्सर्व्वशरीरगस्समानस्तु देहमध्यगः एवमिहासुश्च पौनरुक्त्या नागकूर्म्मकृकलदेवदत्तधनञ्जयाख्या अपि पञ्च गृह्यन्ते एवं मनोबुद्धिचिन्ताहङ्कारात्मन्यन्तःकरणे चित्तमित्यर्थः । एवमधीतमध्ययनम्वाग्वचनम्मनस्सङ्कल्पविकल्पात्मकञ्चत्तुः कृष्णताराग्रवर्त्तीन्द्रियं श्रोत्रङ्कर्णशष्कुल्यवच्छिन्ननभःप्रदेश इत्यर्थः । एवमपराण्यपीन्द्रियाणि बलञ्चेत्यादि सर्व्वं यज्ञेन मदर्थङ्कल्पन्तामिति मन्त्रार्थः ॥ ५ ॥ अपरमप्याह । सत्यञ्चेति । तत्र तावत्त्रिकालाबाध्यत्वन्तद्युक्तमित्यर्थः । एवं शमदमोपरतितितिक्षाश्रद्धासमाधानाख्यषट्सम्पत्तिषु या मुख्या श्रद्धा सापीत्यर्थःतथा-गच्छतीति जगत्तदीयन्धनमैश्वर्य्यम्विश्वम्प्रकृत्याख्यम्महः पुनरुपादानाद्दैवन्तेजः क्रीडा द्विविधा मोदोपि द्विविधो जातम्भूतकालगम्यं जनिष्यमाणम्भविष्यत्कालगम्यम्वर्त्तमानंच प्रसिद्धमेव वेद्यम् । एवं सक्तमिदं शतरुद्रीयमन्यच्च देवीसूक्तादिकं

मे जनिष्यमाणं च मे सूक्तं च मे सुकृतं च मे यज्ञेन कल्पन्ताम् ॥ ६ ॥ ऋतंच मेनृतंच मे यक्ष्मंच मे नामयश्च मे जीवातुश्च मे दीर्घायुश्च मे मित्रंच मे भयं च मे सुखंच मे शयनंच मे सखा च मे सुदिनंच मे यज्ञेन कल्पन्ताम् ॥७॥ व्रीहयश्च मे यवाश्च मे माषाश्च मे तिलाश्च मे मुद्गाश्च मे प्रियङ्गवश्च मेणवश्च मे श्यामाका-श्च मे नीवाराश्च मे गोधूमाश्च मे मसुराश्च मे

सुकृतञ्चेहामुत्रादिसाधकंचसादि सर्व्वं यज्ञेन मदर्थङ्कल्पन्तामिति मन्त्रार्थः ॥ ६ ॥ अपरमप्याह । ऋतंचम इति । तत्र तावदिह ऋतं सत्यमनृतमसत्यं यक्ष्म बलमनामयो निर्म्मलो जीवातुर्ज्जीवो दीर्घायुश्च प्रसिद्धः एवम्मित्रम्भयं सुखंचेत्यादि सर्व्वं यज्ञेन मदर्थङ्कल्पन्तामित्यर्थः ॥ ७ ॥ अपरमप्याह । व्रीहयश्च मइति । एवंमिह हेमन्ते सर्व्वसस्यानां जायते पत्रसातनम् । मोदमानाश्च तिष्ठन्ति यवाः कणिशशालिन इत्यादिस्मृत्योपलक्षिता यवाश्चेत्यर्थः । एवमिह खल्वशब्देन विश्वामित्रीयधान्यविशेषा गृह्यन्ते तथाणवस्सूक्ष्मधान्यानि मसुराश्च निस्तुषा एव ग्राह्या इत्यलाबू वर्त्तुलाकारं मसुरान्नं सवल्कलभ् मृत्तिकाभक्षणञ्चैव सद्यो मांसस्य भक्षणमित्यु-

यज्ञेन कल्पन्ताम् ॥ ८ ॥ अग्निश्च मआपश्च मे वीरुधश्च मओषधयश्च मे कृष्टपच्याश्चमेऽकृष्टपच्याश्च मे सिकताश्च मे वनस्पतयश्च मे हिरण्यञ्च मे जनुश्चमे श्यामञ्चमे लोहञ्च मे सीसञ्चमे त्रपुच मे यज्ञेन कल्पन्ताम् ॥ ९ ॥ आयुर्य्यज्ञेन कल्पन्ताम्प्राणो यज्ञेन कल्पन्ताञ्च क्षुर्यज्ञेन कल्पन्ता ँ श्रोत्रँ य्यज्ञेन कल्पन्ताम्वा ग्यज्ञेन कल्पन्तां मनो यज्ञेन कल्पन्तामात्मा यज्ञेन कल्पन्ताम्ब्रह्मा यज्ञेन कल्पन्ताम्विष्णुर्य्य

पपातकमपीति सर्व्वं यज्ञेन कल्पतामिति मन्त्रार्थः ॥ ८ ॥ अपरमप्याह । अग्निश्चम इति । तत्र तावदग्निः प्रसिद्धोऽप्रसिद्धश्च तथापो जलान्यपि द्विविधा वीरुधस्तृणसङ्कुलस्थौषधयः प्रसिद्धाः कृष्टे स्वयमेव पच्यन्तइति कृष्टपच्यास्त दन्याश्चेत्यर्थः । एवं सिकता वनस्पतयश्च प्रसिद्धाः तथा हिरण्यं सुवर्णं जनुर्ज्जन्म श्यामं लौहं सीसञ्च प्रसिद्धमेवेत्यादि सर्व्वं यज्ञेन यज्ञात्मना मदर्थङ्कल्पन्तामित्यर्थः ॥ ९ ॥ अथ सर्व्वात्मना समर्प्पयन्पुनरप्याह । आयुरिति । एवन्तर्हि याव ज्जीवमग्निहोत्रञ्जुहोतीत्यादिश्रुत्यायुर्य्यज्ञेन कल्पन्तामित्यर्थः । एवम्ब्राह्मणस्य हि देहोयं क्षुद्रकामाय नेष्यते । कृच्छ्राय

ज्ञेन कल्पन्ताम् ॥१०॥ ज्योतिर्यज्ञेन कल्पन्ता स्वर्यज्ञेन कल्पन्ताम्पृष्ठंय्यज्ञेन कल्पन्तां य्यज्ञो यज्ञेन कल्पन्ताम् । स्तोमश्चयजुश्च ऋक्च साम च बृहच्च रथन्तरञ्च स्वर्द्देवा अगमन्नमृता अभूम प्रजापतेः प्रजा अभूमो वस्स्वाहा ॥११॥ इति रुद्रजाप्ये सप्तमोऽध्यायः ॥

ऋचम्वाचम्प्रपद्ये मनो यजुः प्रपद्ये साम

तपसे चेह प्रेत्यानन्तसुखाय चेत्यादि द्रष्टव्यम् ॥ १० ॥ अपरमप्याह । ज्योतिरिति । तत्र तावदिह स्वरित्यनेन स्वर्गस्तदर्थो यो यज्ञस्तेन तदात्मना कल्पन्तामित्यर्थः । एवमिह चतुर्भिश्च चतुर्भिश्च द्वाभ्याम्पञ्चभिरेव च हूयतेच पुनर्द्वाभ्यान्तस्मै यज्ञात्मने नम इत्यादिस्मृत्या यज्ञो हिरण्यगर्भाख्यो विष्णुर्य्यज्ञेन यज्ञात्मना शिवार्थङ्कल्पन्तामित्यर्थः । एवमिह स्तोमऋशाखाविशेष इत्यादिवेदचतुष्टयेन प्रार्थनयात्विह यज्ञे स्वर्द्देवा अगमन्नागच्छन्तु यत्क्रियया वयमसृता अभूमः प्रजापतेः प्रजा वा भूम इत्येतदर्थं स्वाहेत्यादिभिर्वो युष्मान्पूजयाम इति मन्त्रार्थः ॥ ११ ॥ इति श्रीपदवाक्यप्रमाणावारपारज्ञविप्रराजेन्द्रविरचिते रौद्रकल्पे सप्तमोऽध्यायः ॥

ननु पूर्व्वोक्तभावनया कृते यज्ञे यज्ञकर्त्तारः किंरूपा भवन्तीत्यभिप्रेत्याह । ऋचम्वाचमिति । एवं सति स यज्ञकर्त्ता

प्राणम्प्रपद्ये चक्षुश्श्रोत्त्रम्प्रपद्ये वागोजस्सहौजो· मयिप्राणापानौ ॥ १ ॥ यन्मेच्छिद्रञ्चक्षुषोहृदय· स्य मनसो वा तृप्तिम्बृहस्पतिर्म्मे तद्दधातु शन्नो भवतु भुवनस्पतिः ॥ २ ॥ ॐ भूर्भुवस्स्वः ॐ तत्सवितुर्व्वरेण्यम्भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् ॥ ३ ॥ कयानश्चित्रमाभुवं

यस्सर्व्वज्ञस्स सर्व्वविद्भवतीत्यादिश्रुतिसिद्धं महत्वं यथा मया· प्तन्तथा प्राप्नोतीति ऋचम्वाचम्प्रपद्यइत्याद्यवधार्य्य वागोज· स्सहौजसामयिप्राणापानौ भवत इत्यादिरर्थः ॥ १ ॥ एवं दैव· म्भावमपरमपि दर्शयति । यन्मइति । तथा चेह यन्मे चक्षुष· श्छिद्रं हृदयस्य मनसो वा तत्रातितृप्तिम्बृहस्पतिस्तत्तस्मान्मे दधातु भुवनस्पतिश्च नोस्माकं शङ्कल्याणमपि दधात्वित्य· र्थः ॥ २ ॥ अथैवमपि यज्ञावसानेपि षोडशमुद्राम्प्रदर्श्य जपान्ते चाष्टावनुसन्धाय ऋष्यादिस्मरणपूर्व्वक व्याहृतित्रयपूर्व्विकाञ्च तुर्व्विंशत्यक्षराङ्गायत्रीम्पुनर्ज्जपेदित्याह । ॐ भूरिति । तत्र तावद्भूरित्यादित्रिभुवनमोम्ब्रह्मैवेत्यर्थः । एवं सत्यनन्यानि· ष्कले तत्वे प्रभा भानोरिवामलेत्यादिस्मृत्या भर्गो देवस्य सुपांसुलुगितिस्मरणाद्भर्गस्य देवस्य महादेवस्य परब्रह्मणस्सवि तुरिव तद्वरेण्यं शक्त्याख्यन्तेजो धीमहि ध्यायामइत्यर्थः । यश्च भर्गो यया शक्त्या नोस्माकं धियोन्तःकरणानि तपोयज्ञादिकर्म्मसु प्रचोदयात्प्रेरयेदिति महामन्त्रार्थः

दूतीसदावृधः सखा । कयासचिष्ठयावृतः कस्त्वा-
सत्योमदानाम्म ॐ हिष्ठोमत्सदन्धसोदृढाचिद्दा-
रुजवेसुः ॥ ४ ॥ अभीषुणस्सखीनामविताज-
रितॄणां शतम्भवास्यूतिभिः । कयात्वन्नऊत्याभि-
प्रमन्दसेवृषन्कयास्तोतृभ्यआभर ॥ ५ ॥ श-
न्नोदेवीरभिष्टय आपोभवन्तुपीतये शंय्योर-

॥ ३ ॥ अथ पुनर्विविच्य प्रार्थयन्नाह । कयेति ।
तत्र हे सदाशिव सर्व्वसाक्षिन्कया शक्त्या नोस्माकमाभुवञ्चि-
त्रम्फलम्भविष्यतीति सैव शक्तिर्दूतीरूपा तयाऽहं सदा वृधो
वर्द्धमानस्स्यामिति प्रार्थना । एवङ्कया शक्त्या सचिष्ठया
सच्चिद्रूपया सखेति मत्वा सदावृतोहं स्यामिति च प्रार्थना एवं
हेभगवन्कस्त्वाम्प्राति मदानाम्प्रबलानां मत्सदन्धसः प्रबलाज्ञा-
नवान्मंहिष्टो महान्दृढाचिद्दारुजे दुःखदे वसुस्समर्थस्तमभीषुणो
विनाशयेतिपरेणान्वयः ॥ ४ ॥ सखीनामिति । हे भगवन्कस्ते
सखीनां मध्येऽविता कश्च जरितॄणाम्वृद्धानां मध्ये प्रबलस्स
पुरुषस्तं माम्प्राप्तमास्यूतिभिर्विस्तृतशक्तिभिस्सह रक्षत्वित्यर्थः
एवम्वृषुसेचनइत्यस्माद्धे वृषन्कयोक्त्या जन्मादिलीलया व्योमा-
कोशखाम्बराब्धिवसवइत्यङ्कन्यायेन नोस्मानभिप्रमन्दसे सं-
क्रीडसे तया कयापिलीलाशक्त्या स्तोतृभ्यआधिक्येन माम्विजा-
नन्नाभरेत्यर्थः ॥५॥ एवं देवानां देव्योप्यस्मान्रक्षन्त्वित्याह ।
शन्न इति । एवं सत्यभीष्टयेऽस्माकं स्वेष्टसिद्धये देवानां देव्यापि

भिस्रवन्तुनः । स्योनापृथिवीनोभवान्नृक्षरानिवे-शनीयच्छं नश्शर्म्म सप्रथाः ॥ ६ ॥ आपो-हिष्ठामयोभुवस्तानऊर्ज्जेदधातनो महेरणाय-चक्षसे । योवश्शिवतमोरसस्तस्यभाजय-तेहन उशतीरिव मातरः ॥ ७ ॥

नोस्माकं शङ्कल्याणङ्करोतु तथापश्च पीतये शङ्कुर्व्वन्तोऽभिस्रव-न्त्वित्यर्थः । एवं स्योना विस्तृता पृथिव्यापि नृक्षरान्मनुष्या-नीशनी मातृरूपा सती यथा रक्षति तथा नोस्मान्भवानपि रक्षत्वित्यर्थः । यद्यस्मान्नोस्माकं शङ्कल्याणम्भवतु जगत्सार्श्च मम शर्म्म सप्रथा कल्याणकथाः प्रसृता भवन्त्वित्यर्थः ॥ ६ ॥ नन्वद्भ्यः पृथिव्युत्पन्नेत्यपाङ्गारिष्ठत्वेनस्तुतिस्तासाम्वक्तव्यैवे-त्याह । आपोहीति । तत्रैवंसतीह हे आपो हि यस्माद्यूयं नोऽस्मभ्यं मयोभुवोमयस्सुखन्तस्यभुवोभावयित्र्यःस्थसुखदायिन्योभवथेत्य-र्थः । तस्मान्नोऽस्मानूर्ज्जे बलप्राणाय दधातन स्थापयतेतितङ-स्तनपादेशश्छान्दसः एवं महे महते रणायापि चक्षस इत्यर्थः । एवं हे आपो वो युष्माकं यो रसो निर्य्यासः परमार्थश्शिवतम-स्तस्य रसस्येह नोस्मान्भाजयत भागिनः कुरुत उशतीरिवेच्छ-न्त्यो मातर इव तस्य भागिनः कुरुतेति मन्त्रार्थः ॥ ७ ॥ तस्मा इति । एवं हे आपो वो युष्माकं यस्य रसस्याब्रह्मस्तम्बपर्य्य-न्तजगद्भोग्यत्वेन क्षयाय यूयं जिन्वथ प्रीणयथ तस्मै रसाय

तस्मा अरङ्गमामवोयस्य क्षयायजिन्वथ । आ-
पोजनयथाचनः । इन्द्राविश्वस्यराजतशन्नोऽस्तु
द्विपदेशञ्चतुष्पदे ॥ ८ ॥ आपः पुनन्तुपृथिवी-
म्पृथ्वीपूता पूनातुमाम् । पुनन्तुब्रह्मणस्पतिर्ब्र-
ह्मपूतंपूनातुमाम् । यदुच्छिष्टमभोज्यंयद्वादुश्चरि-
तंमम सर्व्वम्पुनन्तुमामापोऽसताञ्च प्रतिग्रह ᳲ
स्वाहा ॥ ९ ॥ सूर्य्यश्च मामन्युश्चमन्युपतयश्च

वयमरं नामालम्पूर्णं यथा स्यात्तथा तृप्तिङ्गमाम गच्छाम
इत्यर्थः । ततो नोस्माकं यूयं जनयथा च तं रसम्परिकल्पयथे-
त्यर्थः । एवंसत्यापोमयः प्राण इत्यादिश्रुतेर्यूयाम्विश्वस्य जगत
इन्द्रा ईश्वरास्सन्तो राजतइत्यर्थः । ततश्च द्विपदेचतुष्पदेनाम
सर्व्वावस्थायां नोस्माकं शङ्कल्याणमस्त्विति प्रार्थनेति मन्त्रार्थः
॥ ८ ॥ आप इति । एवमत्रापः पृथिवीम्पुनन्तु पृथिव्यद्भिः
पूता सती मां क्षेत्रज्ञं जीवम्पुनातु तत्र तु केवलमेवमेवापि तु
ब्रह्मणस्पतिं ज्ञानाश्रयमीश्वरन्तदपीश्वराख्यम्ब्रह्म धर्म्मो रक्षति
रक्षित इति स्मृतिन्यायेन पूतं सत्पुनर्म्माम्पुनात्विसर्थः । एवं मम
यदुच्छिष्टङ्गर्हितम्भोज्यं यदपि दुश्चरितमसदाचरणमसताम्प्र-
तिग्रहञ्च तत्सर्व्वं मामापः पुनन्त्वित्यर्थः । इत्थं सत्याचम्य-
न्तइत्यापस्स्वाहा हुतवत्य इत्यर्थः ॥ ९ ॥ एवमत्रापाङ्कारणभू-
तन्तेजस्तत्र तेजसाम्पातिमपि प्रार्थयन्नाह । सूर्य्यश्चेति । तत्र

मन्युकृतेभ्यः पापेभ्योरक्षन्ताम् । यद्रात्र्यापाप मकार्षं मनसावाचाहस्ताभ्याम्पद्भ्यामुदरेण शिश्ना रात्रिस्तदवलुम्पतु ॥ १० ॥ अग्निश्चमामन्युश्च मन्युपतयश्चमन्युकृतेभ्यः पापेभ्योरक्षन्ताम् । यदन्हा पापमकार्षं मनसा वाचाहस्ताभ्याम्पद्भ्यामुदरेणशिश्ना ऽहस्तदव लुम्पतु ॥ ११ ॥ ऋतञ्चसत्यञ्चाभित्धात्तपसो

तावदिह मन्युर्यज्ञस्तथा मनुपतयश्चेन्द्राद्यास्ते सर्व्वेऽपि मन्युकृतेभ्यो सतां यज्ञेभ्यः तथामन्युः क्रोधस्तत्पतय इन्द्रियाणि तत्कृतेभ्यश्च पापेभ्यो रक्षन्तामित्यर्थः । एवं यत्किञ्चित्पापं रात्र्याकार्षं मनसेत्यादिना शिश्ना शिश्नेनाहस्तदवलुम्पतु नाशयतु एवमेव यत्किञ्च मयि मदाश्रितम्पापन्तादिदमापस्सन्तीति कृत्वाहं सूर्य्ये ज्योतिषि जुहोमि स्वाहा हुतम्भवत्विति मन्त्रार्थः ॥ १० ॥ अथ भौमादिव्यौदर्य्यार्कर्य्यभेदेनतेजसामनेकरूपत्वात्ताद्रूपेणापि प्रार्त्थयन्नाह । अग्निश्चेति । तत्र तावदिहाप्यग्न्यादयो मां यथोक्तरीत्या पापेभ्यो रक्षन्तामित्यर्थः। एवं यत्पापमन्हा दिवसेनाप्यकार्षं मनसेत्यादि तदपि पापं रात्रिरवलुम्पतु तथा यत्किञ्चिद् दुरितं मयि मदाश्रितन्तादिद मापस्सन्तीति कृत्वामृतयोनौ सत्ये ज्योतिषि परमशिवे परमात्मनि जुहोमि स्वाहेति मन्त्रार्थः ॥ ११ ॥ अथ सत्यं

ऽध्यजायत ततो रात्र्यजायत ततस्समुद्रोऽर्णव-
स्समुद्रादर्णवादधि संवत्सरोजायत । अहोरा-
त्राणि विदधद्विश्वस्य मिषतो वशी सूर्याचन्द्र
मसौ धाता यथापूर्व्वमकल्पयाद्दिवञ् च पृथि-
वीञ्चान्तरिक्षमथो स्वः ॥ १२ ॥ दृतेदृ ं
हमा मित्रस्य मा चक्षुषा सर्व्वाणि ह भूतानि
समीक्षतात् मित्रस्याहञ्चक्षुषा सर्व्वाणि

ज्ञानमनन्तम्ब्रह्मेत्यादिश्रुतिवेद्यं सर्व्वजगताङ्कारणभूतं स्मार-
यन्नाह । ऋतश्चेति । तत्र तावदृतमेकाक्षरम्ब्रह्मेत्यादिश्रुते-
स्सत्यञ्च त्रैकालाबाध्यम्ब्रह्म पूर्व्वमभित्थान्नामासीदित्यभेश्च
परसवर्णः छन्दसीतिसस्योदःस्थादिति पूर्व्वसवर्णः । एतेन
महाप्रलये समये केवलं यत्रातमस्तन्न दिवा न रात्रिरित्यादि-
श्रुत्यापि ब्रह्मैवासीदित्यर्थः । ततस्तपसः प्राणिनामदृष्टव-
शात्सकलान्धकारमयमासीदिति रात्र्यजायत ततश्च समुद्रोऽर्णवः
पानीययुक्तः ततश्चाधिसम्वत्सरः ततश्च विश्वस्य मिषतो वशी
कुर्व्वतश्च धातुस्सकाशात्सूर्य्याचन्द्रमसौ दिवारात्रिविभागवन्तौ
जाताविति स धातैव हिरण्यगर्भो यथा पूर्व्वकल्पेऽकल्पयत्तथे-
दानीमपि सर्व्वमुत्पन्नमित्यथोनन्तरं सृष्ट्युदयेन स्वःप्रातःकालो
जातइति मन्त्रार्थः ॥१२॥ नन्वस्त्वेवरूपरन्तु सर्व्वसाक्षिणः परम-
शिवस्य भक्तजनहेतवे किङ्करणीयमस्तीत्याह । दृतइति । एवं

ह भूतानि समीक्षे ॥ १३ ॥
नमस्ते हरसे शोचिषे नमस्तेऽस्त्वर्चिषेऽन्यास्ते-
ऽस्मत्तपन्तु हेतयः पावकोऽस्मभ्य ँ शिवो भव
॥ १४ ॥ नमस्तेऽस्तु विद्युते नमस्ते स्तनयि-
त्नवे नमस्ते भगवन्नस्तु यतस्स्वस्समीहसे ।१५।

सति हे देव पापेभ्यस्तज्जन्यशत्रुभ्यो वा इते भये भाप्ते तेषां इहमा भव विनाशकस्त्वम्भवेत्यर्थः । एवमेव मित्रस्य चक्षुषा माम्पश्य तथा तव भक्त्या भसिद्धानि यानि भूतानि तान्यपि मित्रस्यैव चक्षुषा भवान्समीक्षतादित्यर्थः । एवमेवाहमपि सर्व्वाणिभूतानि मित्रस्यैव चक्षुषा समीक्षे माभूद्वैरभावः केनापीत्यर्थः॥१३॥ एवम्प्रकारान्तरेणाप्याह । नमस्तइति । हे देव हरसे सकलसन्तापहर्त्रे शोचिषे सर्व्वसाक्षिणे ते तुभ्यं नमोस्त्वित्यर्थः । तथार्च्चिषे ज्योतिःस्वरूपाय पुनर्न्नमस्तेऽस्त्वित्यर्थः । अथ किमर्थमित्याह । अन्याइति । हे देव हेमन्ते पावकीभूता यथा तथास्मदर्थमन्यास्तव हेतयस्तपन्त्वित्यस्मभ्यं शिवो भवेत्यर्थः ॥ १४ ॥ एवम्प्रकारान्तरेणाप्याह । नमस्तइति । हे देव यतो यद्रूपेण त्वम्मे स्वमङ्गलं समीहसे तद्रूपेण विद्युते विद्योतनकर्त्रे स्तनयित्नवे गर्ज्जनकर्त्रे वा ते तुभ्यमनेकशो नमस्तोस्त्विति मन्त्रार्थः ॥१५॥ एवं नहि मन्त्राणां यामितास्तीति न्यायेन पुनरप्याह । यतो यतस्समीहसे ततस्ततो भक्तिवात्सल्यान्नोऽस्मभ्यं शङ्कल्याणङ्कुर्व्वन्नभयङ्कुर्व्वित्यर्थः । एवमेव प्रजाभ्यः

यतो यतस्समीहसे ततो नोभयङ्कुरु शन्नः कुरु प्रजाभ्यो ऽभयन्नः पशुभ्यस्सर्व्वेभ्यश्चाभयं कुरु स्वाहा ॥ १६ ॥ द्यौश्शान्तिरन्तरिक्ष ँ शान्तिः पृथिवी शान्तिरापश्शान्तिरोषधयश्शान्तिर्व्वनस्पतयश्शान्तिर्विश्वेदेवाश्शान्तिर्ब्रह्म शान्तिस्सर्व्व ँ शान्तिश्शान्तिरेव शान्तिस्सा मा शान्तिरेधि ॥ १७ ॥ ब्रह्महत्यात्पूतो भवति वृषलीगमनात्पूतो भवति सुरापानात्पूतो भवति ।

पशुभ्यस्तदन्येभ्यश्च सर्व्वेभ्योऽभयङ्कुर्व्विति स्वाहेति हुतमित्यर्थः ॥ १६ ॥ अथ यदुत्तरपदभ्रष्टम्वेति न्यायेन क्षमापयन्नुपसंहरति । द्यौरिति । तत्र तावद् द्यौस्तद्गता देवता वा शान्तिः क्षमतामायात्वित्यर्थः । एवमन्तरिक्षन्तद्गता देवता वा शान्तिः क्षमतामायात्वित्यादिरर्थः । एवमिन्द्रस्य दुहिता जाता इषानाम्नी महातपाः तस्याः पुत्रास्समुत्पन्ना विश्वेदेवास्त्रयोदशेतिस्मृत्युक्ता विश्वेदेवाः प्रत्येकं शान्तिः क्षमतामायान्त्वित्यर्थः । एवमिह साम्प्रति सैवं शान्तिरप्येधि वर्द्धतामिति मन्त्रार्थः ॥ १७ ॥ नन्विह जन्मनि जन्मान्तरे वा कृतानान्त्रिविधब्रह्महत्यादिमहापातकानाङ्कथन्निवृत्तिरित्यप्यनेनैवेत्युपसंहरन्नाह । ब्रह्महत्यादिति । तत्र तावद्ब्रह्महत्याया इत्यपेक्षिते छान्दसत्वाड्डाऽसीत्यदादेशः । एवमिह मन्त्रे वीप्सोक्तिश्च

अकृत्याचरणात्पूतो भवति यश्शतरुद्रीयमधी-
तेयश्शतरुद्रीयमधीते ॥ १८ ॥ इति श्रीशतरु-
द्रीयजाप्ये ऽष्टमोध्यायः ॥

गणानान्त्वा ॥१५॥ सहस्रशीर्षा ॥१७॥
आशुश्शिशानः ॥ १३ ॥ विभ्राट् ॥ ८ ॥
नमस्तेरुद्रमन्यवे ॥ १९ ॥ नतंविदाम ॥ १० ॥
वाजश्चमे ॥ १० ॥ ऋचंवाचंप्रपद्ये ॥ १८ ॥

वेदसूक्तसमाप्त्यर्थमित्युपरम्यते ॥ यज्ञकल्पे पुरा देवैः प्रेरिता मुनयो भृशम् । वेदादिबलान्पठित्वाग्निं नो शक्तास्तं समाव्हयन् । सर्गात्पुरानिरालोकं यदेकं निष्कलम्परम । चिदानन्दमयञ्ज्योतिस्स आद्यः केवलश्शिवः । स एवादौ रजोरूपं सृष्ट्वा ब्रह्माणमात्मना । सृष्टिकर्म्मनियुक्ताय तस्मै वेदांश्च दत्तवान् । स आत्मभूस्सृजान्विश्वञ्चतुर्भिर्व्वदनैर्व्विराट् । ससर्ज्जवेदांश्चतुरो लोकानां स्थितिहेतवे । धृतो रुद्रात्मकस्तस्माद्वेदसारस्समुद्धृतः । एष एव परो मन्त्रश्चैष एव परन्तपः । चतुर्व्वेदानुगम्मन्त्रञ्चाष्टधाप्यर्थसंयुतम् । इहामुत्र च कैवल्यं जप्त्वा सिद्धिं लभेद् ध्रुवम् । गणेत्येतत्सहस्रेति चाशुर्व्विभ्राण्नतास्विदा । वाजश्चेति ऋचञ्चेति शतरुद्रीयमीरितम् ॥१८॥ इति श्रीपदवाक्यप्रमाणपारावारपारङ्गविप्रराजेन्द्रविरचिते रौद्रकल्पे ऽष्टमोध्यायः ॥ शुभम् ॥

